# ग्राहकेषु काचित् विज्ञप्तिः उद्घोषणा च

मान्याः,

भवतां पत्रिका एषा **'चन्दमामा'** पञ्चाशत्तम(५०)वर्षस्य अन्तिमे घट्टे अस्ति। (संस्कृतचन्दमामा तु त्रयोदशे वर्षे पदं निधत्तवती अस्ति।) न एतं सन्दर्भं निमित्तीकृत्य, अपि तु विलक्षणां परिस्थितिम् अभिलक्ष्य व्यवस्थायां किञ्चित् परिवर्तनं करणीयम् आपतितम्। तेषु परिस्थितेः अंशेषु -

**प्रथमः - कागदम्** अभिलक्ष्य। वयं तु सदापि विदेशात् आनायितानि कागदानि एव उपयुञ्महे। किन्तु गतेषु वर्षेषु महता प्रमाणेन अपेक्षिताकारकाणां पत्राणां प्राप्तौ, नैरन्तर्येण वृद्धिं गच्छतः मूल्यस्य दाने च वयं महत् कष्टम् अनुभवन्तः स्मः।

कागदमूल्ये निरन्तरवृद्धिः जाता यत्, मुद्रणप्रक्रिया अपि दिने दिने महार्घा जायमाना अस्ति यत् तदुभयस्य कारणतः वयं महति कष्टे पतितवन्तः स्मः।

यथा पूर्वं कृतं तथैव एतादृशानां क्लेशानां परिणामः ग्राहकाणाम् उपरि यथा न भवेत् तथा कर्तुम् अस्माभिः महान् प्रयत्नः कृतः एव। तथापि वयम् असफलाः स्मः। ईदानीं तादृशी परिस्थितिः आपतिता अस्ति यत् व्ययभारविभागे सहकारं यच्छन्तु इति प्रार्थनातः ऋते नान्या गतिः अस्माकम्।

**द्वितीयः - मूल्यम्** उपलक्ष्य। वर्षस्यास्य (१९९६) जुलैमासतः आरभ्य चन्दमामायाः मूल्यं रूप्यकेणैकेन वृद्धिं गमिष्यति। प्रतिसञ्चिकं मूल्यं रू. ६ - ०० भविष्यति। वार्षिकं ग्राहकशुल्कं च भविष्यति - रू. ७२ -००

**तृतीयः - आकारम्** अधिकृत्य। इतः परम् एतस्याः आकारः किञ्चिदिव परिवृद्धा भविष्यति। एषा परिवर्धितावृत्तिः चन्दमामायाः सुवर्णमहोत्सवनिमित्तिका इत्यतः मूलसत्त्वात् नितरां भिन्ना तु न भविष्यति।

एतत् परिवर्तनं भवन्तः स्वागतीकरिष्यन्ति इति विश्वसिमः वयम्।

इति भवदीयः

**(बि. विश्वनाथरेड्डी)**
प्रकाशकः

# चन्दमामा

संस्थापकः - **'चक्रपाणिः'** सञ्चालकः - **'नागिरेड्डी'**





## अनुकरणात् भवेत् अपायः

अनुकरणकला मानवेन प्रायः वानरेभ्यः अधिगृहीता, यान् च वानरान् अस्मत्पूर्वजान् कथयन्ति जीवशास्त्रज्ञाः । एवं प्राप्तम् अनुकरणकौशलम् अस्थाने प्रयुज्यते इति तु महतः खेदस्य विषयः ।

मानवेषु स्थिताः मूलप्रवृत्तीः आधारीकृत्य दूरदर्शनकार्यक्रमाः निर्मीयन्ते । एवं निर्मितेषु केषुचित् कार्यक्रमेषु अपराधप्रवृत्तेः प्रचोदकानि दृश्यानि प्राधान्येन प्रदर्श्यन्ते । स्वायत्तसंस्थाभिः प्रचाल्यमानेषु कार्यक्रमेषु यथा तथा सर्वकारेण प्रचाल्यमानेषु कार्यक्रमेषु अपि एतादृशानि एव दृश्यानि दृष्टिगोचराणि भवन्ति । एतस्य परिणामतः बालेषु, युवकेषु, वृद्धेषु, महिलासु च एषा अपराधप्रवृत्तिः विशेषतः प्रवर्धमाना दृश्यते ।



'सहस्रशब्दानाम् उच्चारणात् यः परिणामः भवितुम् अर्हति, सः एव परिणामः एकस्य चित्रस्य दर्शनात् भवति' इत्येतत् वचनं सर्वैः विदितम् एव । अतः वयं विना क्लेशम् ऊहितुं शक्नुमः यत् दूरदर्शनस्य परिणामः जनेषु कीदृशः भवति इति । तत्रत्यानि दृश्यानि अनुकरणार्थं जनान् प्रेरयन्ति । एतस्य परिणामः तु नितरां घोरः !

गते एप्रिल्मासे लखनोनगरे प्रवृत्ता घटना एतस्य प्रत्यक्षम् उदाहरणम् । दूरदर्शनेन प्रदर्श्यमाने कस्मिंश्चित् विज्ञापने कश्चन वीरः शीतलपानीयकूपीभिः पूर्णात् भारवाहकयानात् पतन्तीम् एकां शीतलपानीयकूपीम् उत्प्लुत्य गृह्णाति । एतत् दृश्यम् अनुकुर्वन् कश्चन बालः गृहस्य द्वितीयात् अट्टात् उत्प्लुतवान् । एतस्य परिणामः - तस्य बालकस्य दारुणं मरणम् । विज्ञापनदृश्ये तु तं वीरं रक्षकरज्जुः काचित् अरक्षत् । किन्तु बालकस्य व्यवहारे तादृशं रक्षकसाधनं कथं वा भवेत् ?



एतस्य कथनस्य आशयः अयं न यत् दूरदर्शनस्य पुरतः नेत्रे निमील्य उपवेष्टव्यम् इति । किन्तु दूरदर्शनेन प्रदर्श्यमानं सर्वम् अपि विना विवेचनम् अनुकरणीयम् इत्यपि कथनस्य तात्पर्यं न । दूरदर्शनस्य अपरं नाम 'मूर्खपेटिका' इति । अतः तस्य उपयोगे विवेचनरहिततया न कदापि व्यवहरणीयम् ।


सम्पुटः - १३ जून् - १९९६ सञ्चिका - ३

प्रतिकृतिमूल्यं रू. ५-०० * वार्षिकं ग्राहकशुल्कं रू. ६०-००




# कठिनशब्दानां सान्दर्भिकाः अर्थाः

अतिशेते - Excels
अनुचरणम् - To attend on or serve
अनुपमा - Matchless
अरः - Spokes of a wheel
अवगतः - Understood
आकलयन् - Taking into consideration
आढ्यता - Wealthiness
आभाणकम् - Proverb
इक्षुरसः - Cane juice
उत्कोचः - Bribe
उपधानम् - Pillow
ऋजु - Straight
कपोलकल्पितकथा - Concoction
कम्बलम् - Rug
कर्कटकः - Crab
कूटयन्त्रम् - Trap
केदारः - Paddy-field
क्षामः - Famine
गलितचर्मा - With wrinkled skin
गूढार्थः - Inner meaning
गोधा - Iguana
ग्रथितवान् - Composed
तन्द्रा - Sleepiness
तारतम्यभावः - Comparative idea
तुषारबिन्दवः - Dew drops
द्विधा - In two parts
धिक्करोति - Ridicules
नौकीलकम् - Anchor
पराकाष्ठा - High point
पेषणम् - Grinding
प्रतिवेशी - Neighbour
भल्लूकः - Bear
रज्जुः - Rope
रुद्धम् - Prevented
विकृतघ्नः - Ungrateful
शशः - Rabbit
शिरस्त्रम् - Cap
सफलता - Success
स्फुरद्रूपी - Handsome
स्वयम्भूः - Self-created

वार्ताविशेषः -

# सम्बन्धस्य दृढता

आस्ट्रेलियादेशे गतस्य मार्चमासस्य द्वितीये दिनाङ्के प्रवृत्ते निर्वाचनकार्यक्रमे जान्हवार्ड्वर्यः नूतनप्रधानमन्त्रित्वेन निर्वाचितः अभवत् । प्रधानमन्त्रिभारं स्वीकुर्वन् सः प्रकटितवान् यत् प्रगतिपथे स्थितः आस्ट्रेलिया-भारतसम्बन्धः इतोऽपि दृढतरः भविष्यति इति । एतत् प्रकटनं नितरां हर्षदायकम् अस्ति ।



आस्ट्रेलिया-लेबर्-पक्षः यदा शासनभारं निर्वहति स्म तदा जान् हवार्ड्वर्यः १३ वर्षाणि यावत् प्रतिपक्षस्य लिबरल्-नेषनल्-पक्षसमवायस्य नायकः आसीत् । तदीयेन पक्षेण एतस्मिन् निर्वाचने ९० स्थानानि प्राप्तानि सन्ति । शासनसभायाम् आहत्य १४८ स्थानानि सन्ति । गते निर्वाचने ७९ स्थानानि प्राप्य शासनावकाशं प्राप्तवान् लिबरल्पक्षः एतस्मिन् निर्वाचने ५० स्थानानि प्राप्तवान् अस्ति ।

लेबर्पक्षस्य नायकः पाल् कीटिङ्ग् । सुदीर्घकालात् एतस्य पक्षस्य शासनं प्रचलति स्म । अत्र परिवर्तनम् अपेक्षमाणाः आस्ट्रेलिया-जनाः अन्यं पक्षं प्रोत्साहितवन्तः सन्ति । जनैः अपेक्षितं परिवर्तनं न विदेशीयनीतौ, न वा रक्षणव्यवहारे, प्रत्युत उद्योगिसङ्घटनव्यवहारे । तत्र उद्योगिसङ्घटने एव सर्वे अधिकाराः केन्द्रीकृताः आसन् । अतः यदा स्वामि-सङ्घटनयोः सन्धिप्रस्तावः भवति स्म तदा तानि सङ्घटनानि उद्योगिहितस्य नाशकान् नियमान् अपि अङ्गीकुर्वन्ति स्म । स्वच्छन्दं व्यवहरन्ति स्म च । तत्कारणतः शिक्षणादिक्षेत्रेषु अपि संस्थास्वामिनः सुयोग्यनिर्णयकरणे कष्टम् अनुभवन्ति स्म । ''एतां स्थितिं परिवर्तयिष्यामि । उद्योगिसङ्घटनस्य अनुमतिं विना अपि उद्योगिनः संस्थास्वामिभिः समालोच्य सन्धिं कर्तुं यथा शक्नुयुः तथा व्यवस्था क्रियते'' इति लिबरल्-नेषनल्-पक्षसमवायेन निर्वाचनकाले आश्वासनं दत्तम् आसीत् । एषः प्रस्तावः जनैः पुरस्कृतः दृश्यते तत्र ।

एतस्य कारणतः कीटिङ्ग्वर्यः अधिकारच्युतः अभवत् ।

गते फेब्रवरीमासे १६ दिनाङ्के २२ तम राज्यपालत्वेन प्रमाणवचनं पठन् सर् विलियं डीन्वर्यः उक्तवान् - ''एतस्मिन् एव शतके अध्यक्षीयपद्धतेः आश्रयणं भविष्यति आस्ट्रेलिया-देशे । क्रि. श. २००० तमे वर्षे ओलम्पिक्क्रीडाः अत्र प्रचलिष्यन्ति'' इति । कीटिङ्ग्वर्यः अपि निर्वाचनसमये एतम् एव आशयं प्रकटितवान् आसीत् ।

वृत्त्या न्यायवादी जान् हवार्ड्वर्यः ५६वर्षीयः अस्ति । सः १९८३ तमे वर्षे माल्कं फ्रेजर्-मुख्यमन्त्रिमण्डले अर्थमन्त्री आसीत् । आगामिनि अक्टोबर्मासे अस्मद्देशं प्रति सः आगमिष्यति ।

१९९४ तमे वर्षे अस्माकं देशतः १२५० विद्यार्थिनः उन्नताध्ययनस्य निमित्तम् आस्ट्रेलिया-विश्वविद्यालयान् प्रति गताः आसन् । गते वर्षे एवं गताः आसन् २५०० विद्यार्थिनः । एवम् आस्ट्रेलिया-भारतसम्बन्धः दृढः जायमानः अस्ति । एषः सम्बन्धः दृढतरः दृढतमश्च भवेत् इति आशास्महे वयम् ।




# व्यवहारौचित्यम्

पूर्वं रङ्गराजः नाम कश्चित् आसीत् । सः सदापि सफलः भवति स्म । तस्य प्रतिवेशी देवराजः तु कदापि यशस्वितां प्राप्तुं न शक्नोति स्म । एतस्मात् देवराजस्य मनसि सदापि आत्महीनभावः भवति स्म ।

"रङ्गराजः कार्यारम्भात् पूर्वं दृढसङ्कल्पं करोति, तदनुगुणं कार्यं करोति च । अतः एव सः सदा सफलतां प्राप्नोति । कार्ये सदापि सङ्कल्पदृढता आवश्यकी" इति बहवः स्नेहिताः देवराजं बोधयन्ति स्म ।

अथ कदाचित् कश्चित् संन्यासी तं ग्रामम् आगतवान् । सः महामहिमपुरुषत्वेन प्रख्यातिं प्राप्तवान् आसीत् । ग्रामीणाः बहवः तस्मै संन्यासिने यथाशक्ति उपायनादिकं समर्प्य स्वकष्टादिकं निवेद्य परिहारोपायम् अपि प्राप्तवन्तः ।

"एषः संन्यासी ग्रामीणान् वञ्चयन् अस्ति । संन्यासी सर्वसङ्गपरित्यागी । तेन किमर्थम् उपायनानि स्वीकरणीयानि ?" इति उक्तवान् रङ्गराजः ।

तदा तस्य मित्रैः उक्तम् - "सः वञ्चयन् अस्ति इत्यत्र कः आधारः ? तस्य वञ्चनां किं प्रमाणीकर्तुं शक्नोति भवान् ?" इति ।

"तथा कर्तुं शक्नोमि एव । किन्तु तदर्थं कालावकाशः अपेक्ष्यते" इति उक्तवान् रङ्गराजः । स्नेहिताः रङ्गराजस्य वचनम् अङ्गीकृतवन्तः ।

'संन्यासी वञ्चकः एव स्यात्' इति सन्देहः देवराजस्य मनसि अपि आसीत् । 'रङ्गराजस्य प्रयत्नात् पूर्वम् एव मया अपि प्रयत्नः करणीयः । आदौ मया एव संन्यासिनः कपटता प्रकटीकरणीया' इति चिन्तयन् देवराजः तस्यां रात्रौ संन्यासिनः वासस्थलं गतवान् ।

देवराजः यदा तत्र गतः तदा संन्यासी गाढनिद्रायां मग्नः आसीत् । परीक्षादृष्ट्या

"भामहः"

तस्य दर्शनात् देवराजस्य मनसि अभासत यत् संन्यासिनः श्मश्रुकलापः कृत्रिमः इति । अतः सः संन्यासिनः श्मश्रु आकृष्टवान् । अल्पेन एव श्रमेण तत् देवराजस्य हस्तगतं जातम् । तत् स्वीकृत्य ततः पलायितवान् देवराजः ।

अनन्तरदिने संन्यासी यदा ग्रामीणैः सह वार्तालापे मग्नः आसीत् तदा देवराजः तत्र गत्वा – "एतस्मिन् मा विश्वसन्तु भवन्तः । कृत्रिमश्मश्रुकलापधारी एषः महावञ्चकः अस्ति । ह्यः रात्रौ एतस्य श्मश्रुकलापः मया सङ्गृहीतः अस्ति" इति ग्रामीणान् उक्तवान् ।

"श्मश्रुकलापः एतस्य मुखे अस्ति एव खलु !" इति उक्तवन्तः ग्रामीणाः ।

देवराजः आश्चर्यम् अनुभवन् संन्यासिनं दृष्टवान् । संन्यासिनः मुखे श्मश्रुकलापः यथापूर्वं विराजमानः एव आसीत् । आश्चर्यं कोपं च अनुभवन् देवराजः – "रे दुष्ट ! भवतः श्मश्रुकलापः कृत्रिमः इति ह्यः रात्रौ एव मया ज्ञातम् । निद्रासमये अहं भवतः श्मश्रुकलापम् आकृष्य नीतवान् अपि । स च इदानीं मम स्यूते अस्ति । इदानीं भवान् पुनरपि अन्यं श्मश्रुकलापं धृत्वा जनानां पुरतः उपविष्टवान् अस्ति । धिक् भवन्तम्" इति वदन् संन्यासिनः श्मश्रुकलापं ग्रहीतुम् उद्युक्तः अभवत् ।

तदा संन्यासी कोपेन – "अये उन्मत्त ! भवान् अग्रे एकं पदं स्थापयेत् चेदपि शापेन भवन्तं भस्मसात्करिष्यामि । मम श्मश्रु-



कलापः वास्तविकः, न कृत्रिमः । मम कृत्रिमः श्मश्रुकलापः सङ्गृहीतः इति उक्तं खलु भवता ? सः कुत्र ? आदौ प्रदर्शयतु तावत्" इति उक्तवान् ।

देवराजः स्वस्यूते हस्तं प्रसारितवान् । किन्तु तत्र पूर्वदिने वशीकृतः संन्यासिनः श्मश्रुकलापः न आसीत् । "अहो, वञ्चना ! एषः संन्यासी स्वमन्त्रशक्त्या मम स्यूतस्थं कृत्रिमश्मश्रु-कलापम् अदृश्यतां गमितवान् अस्ति" इति उच्चस्वरेण उक्तवान् देवराजः ।

किन्तु ग्रामीणाः एतस्मिन् वचने विश्वासं न कृतवन्तः । प्रत्युत ते साष्टाङ्गनमस्कार-पूर्वकम् संन्यासिनम् उक्तवन्तः – "यः अपचारः जातः तदर्थं क्षमा प्रदर्शनीया"



''एतस्य संन्यासिनः विषये मया बहवः अंशाः सङ्गृहीताः सन्ति । एतस्य वास्तविकं नाम रमणेन्द्रः इति । एतस्य ग्रामस्य नाम देवगिरिः इति । विविधवेषान् धृत्वा ग्रामेषु अटन् एषः ग्रामीणान् वञ्चयति । देवगिरौ एतस्य पत्नी, त्रयः पुत्राः च सन्ति । एतेन आनीयमानं धनम् उपयुज्य सुखेन जीवन्तः सन्ति एतत्परिवारजनाः'' इति उक्तवान् रङ्गराजः ।

''एतत्सर्वं कथं ज्ञातवान् भवान् ?'' इति आश्चर्येण पृष्टवान् देवराजः ।

''विना त्वरां शान्तचित्ततया यदि कार्ये प्रवर्त्यते तर्हि सर्वम् अवगतं भवति'' इति उक्तवान् रङ्गराजः ।

''एवं तर्हि इदानीम् एव गत्वा तस्य कपटसंन्यासिनः अव्यवहारं प्रकटी-करवाव'' इति उक्तवान् देवराजः ।

तदा रङ्गराजः उक्तवान् - ''मित्र ! अलं त्वरया । यदि वयं संन्यासिनः रहस्यं प्रकटीकुर्याम तर्हि सः अस्मद्विषये कुपितः भवेत् । ग्रामीणाः तं ताडयेयुः अपि । ततः एषः ग्रामान्तरं गच्छेत् । तत्रापि उपायान्तरेण जनान् वञ्चयेत् एव । अतः एतस्मात् न कस्यापि लाभः । जनानाम्, अस्माकं, ग्रामीणानां च हानिः यथा न भवेत् तथा कृतं चेत् अस्माकं प्रयत्नः सफलतां गमिष्यति'' इति ।

अनन्तरदिने रङ्गराजः एकान्ते स्थितस्य संन्यासिनः समीपं गत्वा आत्मना ज्ञातान् अंशान् सर्वान् तम् उक्तवान् । तान् श्रुत्वा

इति । एतत् सर्वं दृष्ट्वा लज्जितः देवराजः ततः निर्गतवान् ।

यदा सः गृहसमीपं गतवान् तदा रङ्गराजः अभिमुखम् आगतः । सः देवराजस्य मुखस्य म्लानतां दृष्ट्वा पृष्टवान् - ''किमर्थं भवान् म्लानमुखः अस्ति ?'' इति । तदा देवराजः प्रवृत्तं सर्वं निवेदितवान् ।

''सः संन्यासी महावञ्चकः इत्यत्र नास्ति सन्देहः । किन्तु तस्य समीपे मान्त्रिकशक्तिः अस्ति । तद्बलात् एव सः भवत्तः आत्मानं रक्षितुं शक्तवान् । किन्तु मत्तः सः आत्मानं रक्षितुं सर्वथा न शक्नुयात्'' इति उक्तवान् रङ्गराजः ।

''एवं तर्हि किं करिष्यति भवान् ?'' इति पृष्टवान् देवराजः ।

संन्यासी नितरां दिग्भ्रान्तः ।

"यदि मानः प्राणाः च रक्षणीयाः तर्हि मया यथा उच्यते तथा आचरणीयं भवता । ग्रामीणाः वक्तव्याः यत् भवतां परीक्षार्थम् एव मया उपायनानि प्रार्थितानि आसन्, संन्यासिनः जीवने किम् उपायनेन ? इति । तदा ग्रामीणाः भवतः श्रेष्ठतायाः प्रशंसां कुर्वन्ति । ततः भवान् स्वग्रामं गत्वा ऋजुमार्गेण व्यवहरन् सुखेन जीवतु " इति सूचितवान् रङ्गराजः ।

संन्यासी एतत् विना विरोधम् अङ्गीकुर्वन् रङ्गराजस्य कथनानुगुणम् आचर्य सर्वेषाम् आदरपात्रं सन् एव ततः निर्गतवान् ।

एतत्सर्वं दृष्टवान् देवराजः नितरां खिन्नः । 'वस्तुस्थितिं प्रकाशितवान् अहम् अपमानितः जातः । वस्तुस्थितिं गोपितवान् रङ्गराजः जनानां प्रशंसां प्राप्तवान् । अहो विसङ्गतिः ! शान्तचित्तता एव रङ्गराजस्य साफल्यस्य बीजम् । अतः मया अपि त्वराशीलता परित्यक्तव्या, शान्तचित्तता आश्रयणीया' इति चिन्तितवान् देवराजः ।

कदाचित् देवराजस्य माता नदीतः जलम् आनयन्ती पतिता । तस्मात् जलं भूमौ पतितम् । तदा सा पुत्रं सूचितवती - "प्रतिवेशी चन्द्रः गृहे अस्ति वा पश्यतु । तद्द्वारा जलम् आनाययतु" इति ।

देवराजः चन्द्रस्य गृहं गतवान् । मध्येमार्गं चन्द्रः भूस्वामिनः गृहात् रिक्तं घटं स्वीकृत्य आगच्छन् दृष्टः । देवराजः तं दृष्ट्वा यावत् किमपि वक्तुम् उद्युक्तः तावता चन्द्रः



ततः वेगेन निर्गतवान् ।

देवराजः कुतूहलेन तम् अनुसृतवान् । चन्द्रः स्वकुटीरं प्रविष्टवान् । देवराजः अपि विनाशब्दं कुटीरद्वारसमीपं गतवान्, अन्तः दृष्टिं प्रसारितवान् च । चन्द्रेण आनीतः घटः वस्तुतः रिक्तः न आसीत्, तस्य अन्तः कलायतैलम् आसीत् । चन्द्रः स्वकुटीरे स्थितम् अन्यं द्रवं कलायतैलेन योजितवान् । एवम् अन्यद्रवमिश्रितेन कलायतैलेन युक्तं घटं स्वीकृत्य कुटीरात् प्रस्थितवान् च । देवराजः झटिति पार्श्वे तिष्ठन् चन्द्रस्य दृष्टिपथात् आत्मानं रक्षितवान् । भूस्वामिनः गृहं प्रति चन्द्रस्य गमनं लक्षितवान् च । ततः तेन निर्णीतं यत् भूस्वामी चन्द्रस्य साहाय्येन कलायतैले



दुर्मिश्रणं कारयन् अस्ति इति ।

अत्रान्तरे रङ्गराजः तत्र आगतवान् । देवराजः तं प्रवृत्तं समग्रं निवेद्य - "एतत्सन्दर्भे अहम् अविचिन्त्य न व्यवहरिष्यामि । चन्द्रः कलायतैले किं मिश्रितवान्, द्रवः तेन कुतः प्राप्तः इत्यादिकं ज्ञात्वा भूस्वामिनः वञ्चनाप्रवृत्तिं प्रकटयिष्यामि" इति उक्तवान् ।

यावत् देवराजस्य वचनं समाप्तं तावता रङ्गराजः वेगेन ततः निर्गतवान् आसीत् । अल्पे एव काले जनान् मेलयित्वा सर्वं निवेदितवान् सः । भूस्वामी तत्र आनायितः । सः उक्तवान् यत् अहं किमपि न जानामि एव इति । तदा देवराजः चन्द्रस्य गृहं गत्वा दुर्मिश्रणार्थम् उपयुक्तं द्रवम् आनीतवान् । तं दृष्ट्वा भूस्वामी चन्द्रम् आनाय्य पृष्टवान् - "किमर्थं भवान् एवम् आचरितवान् ?" इति ।

तदा चन्द्रः कम्पमानस्वरेण वस्तुस्थितिं निवेदितवान् - "स्वामिनी (भूस्वामिनः पत्नी) कौशेयशाटिकां क्रेतुम् इष्टवती आसीत् । भवता तत् निराकृतं खलु ? अतः सा उपायेन कौशेयशाटिकां क्रेतुम् इच्छन्ती माम् उक्तवती यत् कलायतैले अन्यं कमपि द्रवं योजयित्वा पार्श्वग्रामे विक्रीय धनम् आनयतु इति । धनलोभेन अहम् एतत् अङ्गीकृतवान् । दुरदृष्टवशात् एतत् सर्वैः ज्ञातम् अभवत्" इति ।

जनाः रङ्गराजस्य प्रयत्नस्य श्लाघनं कुर्वन्तः भूस्वामिनः कृत्यं निन्दन्तः स्वगृहं गतवन्तः । एतत्सर्वं दृष्ट्वा नितरां खिन्नः देवराजः रङ्गराजसमीपं गत्वा उक्तवान् - "शान्तचित्तता रक्षणीया इति मां वदन् भवान् स्वयं त्वराशीलतां प्रदर्शयन् ख्यातिं प्राप्तवान् । किम् एतत् उचितम् ?" इति ।

तदा रङ्गराजः उक्तवान् - "रहस्य-प्रकाशनं भवद्द्वारा एव जातम् इति सर्वेषां पुरतः मया उक्तम् एव खलु ?" इति ।

"ग्रामीणान् सर्वान् भवान् एव मेलितवान् । ततः नायकत्वम् अपि भवता एव निरूढम् । अतः भवतः एव प्रशंसा सर्वैः कृता । भवता कृतं कार्यं यदि मया क्रियेत तर्हि मयैव प्रशंसा प्राप्ता अभविष्यत्" इति उक्तवान् देवराजः ।

"जनान् न मेलयतु इति मया न सूचितं

खलु ? जनान् मेलयितुं भवान् अपि अशक्ष्यत् एव'' इति शान्तस्वरेण उक्तवान् रङ्गराजः ।

''त्वराशीलता मास्तु कदापि इति भवता अहं बोधितः इत्यतः एतत्सर्वं जातम्'' इति उक्तवान् देवराजः ।

तदा रङ्गराजः मन्दहासपूर्वकम् उक्तवान् - ''एतत्सन्दर्भे यदि विलम्बः आचर्येत तर्हि जनाः तत् तैलं क्रीत्वा पाके योजितवन्तः अभविष्यन् । अतः एव मया अविलम्बेन सर्वे मेलिताः, विषयः ज्ञापितः च । एतेन विपत्तिः निवृत्ता अभवत्'' इति ।

''एवं तर्हि संन्यासिनः व्यवहारे 'विना त्वरां व्यवहरणीयम्' इति किमर्थं बोधितं भवता ?'' इति पृष्टवान् देवराजः ।

''तदा संन्यासी रक्षणीयः आसीत् । अतः त्वरा न करणीया इति मया उक्तम् आसीत् । भूस्वामिनः वञ्चना अविलम्बेन प्रकाशनीया आसीत् । अतः मया त्वराशीलता प्रदर्शिता'' इति उक्तवान् रङ्गराजः ।

''एवं तर्हि कदा वा त्वरां विना व्यवहरणीयम् ? कदा वा अविलम्बेन व्यवहारः करणीयः?'' इति पृष्टवान् देवराजः ।

''समयप्रज्ञाविषये प्रश्नः भवतः । एतस्य उत्तरं प्राप्तव्यं चेत् सर्वादौ भवान् अन्यविषये चिन्तयतु, न तु आत्मविषये । क्रियमाणात् कार्यात् समाजस्य प्रयोजनं यथा स्यात् तथा व्यवहरणीयम् । स्वप्रसिद्ध्यर्थं क्रियमाणं कार्यं न श्रेयस्करम् । लोकहितं मनसि निधाय कार्ये शीघ्रता मन्दता वा अश्रयणीया । यदा लोकहितदृष्टिः भवति तदा व्यवहारस्य शीघ्रता भवेत् उत न इत्येतत् स्वयं स्फुरति'' इति उक्तवान् रङ्गराजः ।

देवराजः इदानीं स्वस्य दोषं ज्ञातवान् । अतः सः लज्जया शिरः अवनमय्य स्थितवान् । ततः आरभ्य व्यवहारनिर्णये रङ्गराजस्य साहाय्यं स्वीकुर्वन् सर्वेषु कार्येषु साफल्यं प्राप्नुवन् सः सुखेन जीवनं यापितवान् ।



# लग्नानुगुणम् उपायनम्

सुवर्णपुरनामकस्य ग्रामस्य भूस्वामिनः कार्यालये नागचन्द्रः नाम कश्चन उद्योगिप्रमुखः आसीत् । तस्य धनाशा अत्यधिका । अतः सः अधिकारबलेन ग्रामीणेभ्यः कृषिकेभ्यः आस्थानस्य उद्योगिभ्यः च धनं, सुवर्णाभरणानि, अन्यविधवस्तुनि वा उपायनरूपेण बलात् स्वीकरोति स्म ।

कदाचित् तस्य जन्मदिनाचरणम् आगतम् । तस्य जन्म कर्कटकलग्ने जातम् आसीत् । एतत् जानन्तः भूस्वामिकार्यालयस्य उद्योगिनः तस्य प्रीत्यर्थं सुवर्णेन कर्कटकं निर्माय तस्मै उपायनरूपेण अर्पितवन्तः ।

नागचन्द्रः तत् उपायनं सन्तोषेण स्वीकृत्य उपायनस्य सुवर्णमयत्वं दृष्ट्वा तृप्तिम् अनुभवन् उक्तवान् - "कर्कटकलग्ने जाताः सर्वेषाम् आदराभिमानस्य पात्रीभूताः सन्तः सर्वेभ्यः उपायनानि प्राप्नुवन्ति । तेषां जन्मकालीनस्य लग्नस्य वैशिष्ट्यम् एतत् । एतस्य उदाहरणभूतः अस्मि अहम् एव । हाँ, स्मृतम् । अग्रिमे मासे मम पत्न्याः जन्मदिनाचरणं भविष्यति । सा मकरलग्ने जाता । मकरस्य आकारादिकं जानन्ति खलु भवन्तः ?" इति ।

तावता तेन एव मार्गेण गच्छन् भूस्वामी एतत्सर्वं श्रुत्वा नागचन्द्रम् उद्दिश्य - "आर्य ! आगामिन्यां पूर्णिमातिथौ मम जन्मदिनाचरणं भविष्यति इति भवान् स्मरेत् एव । अहं सिंहलग्ने जातः । अतः तदनुगुणम् उपायनम् आनीयते खलु भवता ?" इति उक्तवान् ।

एतत् श्रुत्वा लज्जितः नागचन्द्रः शिरः अवनमय्य स्थितवान् ।






# १०

(समुद्रे बहुविधकष्टानि सोढ्वा नौकायाः अनुचराणां च नाशं दृष्ट्वा खिद्यमानः रूपधरः फैयासियाद्वीपं प्राप्तवान् । तत्र राज्ञा महामेधसा आतिथ्यम् अभयं च दत्तम् । रूपधरस्य तोषणार्थं तेन स्पर्धाः आयोजिताः आसन् । अनन्तरं प्रचलिते भोजनकार्यक्रमे अन्धगायकेन गीतां काष्ठमयाश्वस्य गाथां शृण्वन् मनोवेदनया रूपधरः रोदनं कृतवान् । तत् दृष्ट्वा आश्चर्यचकितः महामेधाः रूपधरं - ''भवान् कः ? भवतः देशः कः ?'' इति पृष्टवान् । अनन्तरम् ....)

रूपधरः महाराजं स्वस्य नामग्रामादिकं विवृत्य ट्रोयूदेशस्य पराजयानन्तरं स्वेन अनुभूतानि कष्टानि, विशिष्टानुभवान् च विवृतवान् । रूपधरेण उक्तां कथां श्रुत्वा महाराजः तत्परिवारजनाः सर्वे च आश्चर्यं खेदं च अनुभूतवन्तः ।

अन्ते महामेधाः तत्र सम्मिलितान् जनान् उद्दिश्य - ''अस्माकम् अतिथये पूर्वं यावत् दातव्यम् इति चिन्तितम् आसीत् ततोऽपि द्विगुणितपरिमाणकानि उपायनानि दद्मः । अहं स्वयम् एतस्मै सुवर्णम् उपायनानि च ददामि'' इति उक्तवान् ।

महाराजस्य प्रस्तावं सर्वेऽपि सहर्षम् अङ्गीकृतवन्तः । अनन्तरदिने प्रातः उपायनानि नौकास्थानं प्रति आनीतानि । महामेधाः स्वयं स्थित्वा नौकायां उचिते स्थाने तेषाम् उपायनानां स्थापनस्य व्यवस्थां निर्दिष्टवान् ।



राजभवने महता वैभवेन रूपधरस्य आप्रच्छनकार्यक्रमः सम्पन्नः । तत्र सम्मिलिताः सर्वे अपि आनन्देन आसन् । किन्तु "कदा वा गृहं प्राप्नुयाम्" इति चिन्तयन् रूपधरः पुनः पुनः समयं पश्यति स्म । भोजनं समाप्तम् । अनन्तरं पानीयवितरणम् आरब्धम् । तदा रूपधरः उत्थाय - "आत्मीयाः, भवतां साहाय्येन मम बहुदिनानां अपेक्षा पूर्णा जायमाना अस्ति । अहं स्वदेशं प्रति प्रस्थितवान् अस्मि । भवद्भिः कृतं साहाय्यं, प्रदर्शिताम् आत्मीयतां, दत्तानि उपायनानि च सर्वदा स्मरामि । देवताः सन्तोषेण, अखण्ड-विजयेन, अपूर्ववैभवेन, सम्पत्त्या च भवतः सर्वान् अनुगृह्णन्तु । एषः देशः सर्वदा सुरक्षितः तिष्ठतु" इति वदन् मनसा तान् अभिनन्दितवान् ।

रूपधरस्य वचनं श्रुत्वा तत्र विद्यमानाः सर्वे हर्षातिरेकेण करताडनं कृतवन्तः । रूपधरः महाराज्ञ्या दत्तम् उपायनं स्वीकृत्य तस्याः आशीर्वादं प्राप्तवान् । दासीनां द्वारा रोटिकाः, रक्तद्राक्षारसं च प्रेषितवती आसीत् राज्ञी ।

नौकाचालकाः युवकाः नौकायां कम्बलं प्रसार्य उपधानं स्थापयित्वा रूपधरस्य शयनार्थं व्यवस्थां कल्पितवन्तः । रूपधरः नौकाम् आरुह्य कम्बलस्योपरि उपविष्टवान् ।

नौकाचालकाः स्वस्थाने उपविष्टवन्तः, नौकाचालनम् आरब्धवन्तः च । नौका अग्रे गता ।

अनुक्षणं रूपधरः निद्रां प्राप्तवान् । कष्टानि सर्वाणि समाप्तानि इति चिन्तयन् आनन्देन गाढनिद्रायां मग्नः अभवत् सः । नौका वायुवेगेन चलन्ती द्वितीयदिने उषसि इथाकां प्राप्तवती ।

इथाकातीरे सुन्दरं नौकास्थानम् अस्ति । तत्र नौकास्थगनार्थं नौकीलस्य अपि आवश्यकता न भवति स्म । नौकास्थानस्य निकटे एव कश्चन महावृक्षः आसीत् । वृक्षस्य पार्श्वे एव काचित् गुहा आसीत् । तत्र जिनविग्रहाः आसन् । बृहदाकारकाः स्तूपाः अपि आसन् । एतां गुहां प्रति देवकन्यकाः आगच्छन्ति इति प्रतीतिः । तत्र मनुष्याः अपि गन्तुम् अर्हन्ति स्म ।

नौका यदा तीरं प्राप्तवती तदा नौकाचालकाः अधः अवतीर्य वस्तूनि अवतारितवन्तः । निद्रां कुर्वाणं रूपधरं तथैव उन्नीय सिकतामये तीरप्रदेशे शायितवन्तः । नौकाम् आरुह्य स्वदेशं प्रतिगतवन्तः च ।

यदा रूपधरः जागरितः अभवत् तदा नेत्रे उन्मील्य परितः दृष्टिं प्रसारितवान् । सर्वत्र तुषारकणाः प्रसृताः आसन् इति कारणतः सः स्थलं न अभिज्ञानवान् ।

अन्ते निराशया - "हन्त, पुनः अज्ञातप्रदेशं प्राप्तवान् खलु । अत्र कीदृशाः मनुष्याः भवेयुः इति न ज्ञायते । यदि ते क्रूराः नरभक्षकाः स्युः तर्हि का गतिः स्यात् ? एतस्यां स्थितौ स्वसमीपे एतेषां वस्तूनां स्थापनम् उचितं न भवेत् । एतानि कुत्र गोपयानि ? महामेधाः पूर्णसाहाय्यं न कृतवान् एव । 'इथाकां प्रापयामि' इत्युक्त्वा अन्यत्र एव प्रापितवान् अस्ति" इति चिन्तितवान् ।

प्रतिवस्तु परीक्ष्य दृष्टवान् रूपधरः । सर्वं सुरक्षितम् आसीत् । स्वदेशं स्मरन् सः इतस्ततः भ्रमणम् आरब्धवान् । तावति काले कश्चित् अजपालकः तत्र आगतवान् । पुनर्जन्म प्राप्तवान् इव आनन्दम् अनुभूतवान् रूपधरः । तस्य समीपं गत्वा - "भवन्तं दृष्ट्वा देवदर्शनं कृतवान् इव आनन्दं प्राप्तवान् अस्मि । वत्स, भवता एव अहं रक्षणीयः । सत्यं वदतु । एषः कः देशः ? अत्र कीदृशाः निवसन्ति ? एषः



द्वीपः उत तीरप्रदेशः ?" इति पृष्टवान् ।

तदा सः बालः - "स्वामिन्, भवतः सामान्यज्ञानं न्यूनम् इति भाति । अथवा भवान् कश्चित् वैदेशिकः स्यात् । यतः अस्माकं देशः बहु प्रसिद्धः अस्ति । इथाकाविषये ट्रीयदेशे अपि वार्तालापाः श्रूयन्ते" इति उक्तवान् ।

रूपधरः अत्यन्तं चतुरः । 'एवं तर्हि अहं स्वदेशं प्राप्तवान् अस्मि' इति मनसि एव आनन्दम् अनुभूतवान् सः । किन्तु तम् आनन्दम् अप्रकटयन् - "आम्, आम् । क्रिट्द्वीपसमूहेऽपि इथाकाविषयिकीं वार्तां श्रुतवान् अस्मि । अहं कञ्चित् दुर्मार्गिणं मारयित्वा कोऽपि यथा न जानीयात् तथा पलायनं कृत्वा अत्र आगतवान् अस्मि ।



तदस्तु तावत्'' इति कपोलकल्पितकथाम् एकाम् उक्तवान् रूपधरः ।

रूपधरस्य सम्भाषणसमनन्तरमेव अजपालकः अदृश्यः अभवत् । तत्स्थाने बुद्धिमतीदेवी प्रत्यक्षा अभवत् । रूपधरं दृष्ट्वा हसन्ती सा - ''भवादृशः दृढव्रतः अन्यः न स्यात् । लीलया कपोल-कल्पितकथाः वदति किल भवान् ? स्वदेशं प्राप्तवान् अपि भवान् एतम् अभ्यासं न परित्यक्तवान् किल । अहम् अपि बुद्धिमती अस्मि भोः । मां वञ्चयितुं न शक्नोति भवान् । भवन्तं स्वदेशं प्रापितवती अस्मि । किन्तु भवतः कष्टानि न समाप्तानि । अतः भवतः आगमनवार्ता केनापि न ज्ञातव्या । जागरूकः भवतु'' इति उक्तवती ।

''अम्ब, किम् एषा मम एव कथा ? विश्वसितुम् एव न शक्नोमि किल । भवती माम् उपहसन्ती तु नास्ति खलु ?'' इति पृष्टवान् रूपधरः ।

''पुरतः दृश्यमानस्य वस्तुनः विषये अपि सन्देहः भवतः । भवान् इव यदि अन्यः कश्चित् चिरात् स्वदेशम् आगतवान् अभविष्यत् तर्हि सर्वप्रथमं पत्नीपुत्रादीन् अधिकृत्य प्रश्नान् अप्रक्ष्यत् । मयि अपि विश्वासः नास्ति खलु भवतः ! एकया दृष्ट्या एतत् अपि समीचीनमेव । भवतः पत्नी अहर्निशं भवन्तं स्मरन्ती अस्ति । मित्रबान्धवानाम् अपि एषा एव कथा । स्वदेशं पश्यतु तावत्'' इति उक्त्वा बुद्धिमतीदेवी स्वमायया तत्रत्यान् तुषार-बिन्दून् अपसारितवती । अनुक्षणं रूपधरः तत्रत्यानि पूर्वपरिचितस्थानानि स्पष्टरूपेण द्रष्टुं शक्तवान् ।

अनन्तरं बुद्धिमती गुहां प्रविश्य रूपधरस्य वस्तूनां स्थापनार्थं स्थलं प्रदर्शितवती । अवरोधरूपेण गुहायाः द्वारे महतीं काञ्चित् शिलां स्थापयित्वा द्वौ अपि वृक्षच्छायायाम् उपविश्य वार्तालापं कृतवन्तौ ।

''रूपधर, मासत्रयात् पूर्वं केचन चोराः भवतः गृहं भित्त्वा भवतः सम्पदं पत्नीपुत्रादीन् च अपहर्तुं प्रयत्नं कृतवन्तः । ते इदानीम् अपि प्रयतमानाः सन्ति । एतेषां दुर्मार्गिणां दण्डनदायित्वं भवतः एव । असहाया दुःखतप्ता च सती अपि भवतः

पत्नी विविधैः उपायैः तेषां प्रयत्नं निवारयन्ती भवन्तं प्रतीक्षमाणा अस्ति'' इति उक्तवती बुद्धिमती ।

''अम्ब, भवत्याः कृपा यदि स्यात् तर्हि तान् अपि संहरिष्यामि । किं करणीयम् इति आदिशतु भवती.'' इति उक्तवान् रूपधरः ।

बुद्धिमती - ''सर्वप्रथमं भवतः रूप-परिवर्तनं करिष्यामि । यतः भवन्तं ये केऽपि न अभिजानीयुः । पत्नीपुत्रादयः अपि न अभिजानीयुः । भवान् वराह-पालकेन सह तिष्ठतु । भवतः गृहीयान् वराहान् काकानां पर्वतस्य समीपे चारयन् अस्ति सः अजपालकः । भवतः गमनात् पूर्वम् अहं मम मायया भवतः पुत्रं धीमन्तं गृहं प्रापयामि । भवतः कुशलवार्तां ज्ञातुं सः राराजस्य गृहं गतवान् अस्ति'' इति उक्तवती ।

अनन्तरं सा रूपधरं वृद्धरूपेण परिवर्तितवती । सः गलितचर्मा अभवत् । तस्य केशाः विकीर्णाः अभवन् । बुद्धिमतीदेवी तस्मै एकं दण्डं प्रसेवं च दत्तवती । काकानां पर्वतं प्रति गमनार्थं मार्गं प्रदर्श्य सा अदृश्या अभवत् ।

रूपधरः अरण्यं अतिक्रम्य काकानां पर्वतं प्राप्तवान् । तत्र वराहपालकः आसीत् । रूपधरस्य सेवकेषु सः एकः एव स्वामिभक्तः विश्वासपात्रं च आसीत् । सः कस्मिंश्चित् विशाले भूप्रदेशे गृहं निर्माय वराहैः सह वसति स्म । गृहं परितः लघुभिः शिलाखण्डैः भित्तिं निर्माय तासु सः



कण्टकाकारान् काचकखण्डान् आरोपित-वान् आसीत् । तस्य समीपे सहस्राधिकाः वराहाः आसन् । तं प्रदेशं प्रति रूपधरस्य प्राप्तितः पूर्वम् एव तत्र आगताः केचन चोराः रूपधरस्य कांश्चन वराहान् चोरयित्वा पक्त्वा खादितवन्तः आसन् । वराहाणां र‍् .र्थं चत्वारः शुनकाः आसन् ।

रूपधरस्य आगमनसमये वराहपालकः वितर्द्याम् उपविष्टवान् आसीत् । स्वस्य पादरक्षायाः सीवनं कुर्वन् आसीत् सः । रूपधरं दृष्ट्वा शुनकाः घोरस्वरेण भषन्तः अग्रे आगतवन्तः । अनुक्षणं रूपधरः दण्डं प्रदर्शितवान् । तावति काले वराहपालकः उत्थाय शुनकान् प्रेषितवान् ।

वराहपालकः वृद्धरूपिणं रूपधरम्



उद्दिश्य - "किं तात, मम आगमनं यदि न स्यात् तर्हि एते शुनकाः भवन्तं दष्टवन्तः स्युः । इदानीमेव मम जीवनम् अन्धकारमयम् अस्ति । न जाने, - भवान् इव मम स्वामी अपि प्रतिदिनं जलाहारादिकं लभते वा न वा इति । अत्र तु एते दुष्टाः तस्य वराहान् हत्वा खादन्तः सन्ति । तत् भवतु । भवान् अत्रैव स्थितवान् खलु । अन्तः आगच्छतु । किञ्चित् भोजनं कृत्वा स्ववृत्तान्तं कथयतु" इति उक्तवान् ।

रूपधरस्य भोजनसमये सः वराहपालकः स्वस्वामिनः शौर्य-पराक्रमादीनि, राराजेन सह ट्रोय्देशस्योपरि कृतम् आक्रमणं, युद्धार्थं गतानां तेषाम् अनागमनं च खेदमिश्रितेन स्वरेण विवृतवान् ।

सर्वं श्रुत्वा रूपधरः - "स्वामिन्, भवान् स्वस्वामिनः विषये तावत् वदति किल । कः सः ? मम प्रयाणसमये अहं बहून् देशान् गतवान् अस्मि । मया कदाचित् सः दृष्टः स्यात् अपि" इति उक्तवान् ।

तदा सः वराहपालकः - "भवान् यत् किमपि वदतु । किन्तु भवतः वचने मम गृहस्वामिनी, तत्पुत्रः वा विश्वासं सर्वथा न प्रकटयतः एव । एतावत्पर्यन्तं बहुभिः बहुधा उक्तम् । किन्तु सर्वम् असत्यम् एव आसीत् । भोजन-वस्त्रादीनाम् आशया भवान् किमपि वदन् अस्ति इति भाति" इति उक्तवान् ।

"आहारवस्त्रादीनाम् आशया असत्यकथनं नीचकार्यम् इति अहं भावयामि । अहं प्रमाणपूर्वकं कथयन् अस्मि । अग्रिमायाः अमावास्यातः पूर्वं भवतः गृहस्वामी स्वगृहं प्रत्यागमिष्यति । तस्य शत्रूणां पराजयः निश्चितः । इदानीं पारितोषिकदानं मास्तु । मया उक्तं यदा फलितं भविष्यति तदा पारितोषिकं स्वीकरिष्यामि" इति उक्तवान् रूपधरः ।

"मूर्खः भवान् । इतःपरं तस्य आगमनं कुत्र ? सः कुत्रापि मृतः स्यात् । यदि सः आगमिष्यति तर्हि तदीयपत्नी-पुत्रादयः सन्तुष्टाः भवन्ति इति तु सत्यम् एव । मम गृहस्वामिनः पुत्रः अत्यन्तं स्फुरद्रूपी अस्ति । पितुः इव विशिष्टं सौन्दर्यं तस्य" इति उक्तवान् वराहपालकः ।

अनन्तरम् उभौ अपि बहुकालं यावत्

सम्भाषणे मग्नौ आस्ताम् । रूपधरः आत्मानं क्रीट्देशस्थं परिचायितवान् । 'ट्रोय्युद्धे अहम् अपि भागम् ऊढवान् । अतः रूपधरम् अहं सम्यक् जानामि । मम आगमनमार्गे कस्मिंश्चित् देशे मया सः दृष्टः अपि'' इति उक्तवान् च ।

तदा वराहपालकः - ''अहं भवतः वचने न विश्वसिमि'' इति उक्तवान् ।

सूर्यास्तसमये चारणार्थं गताः वराहपालकस्य सेवकाः प्रत्यागतवन्तः । तद्दिने रात्रौ वराहपालकः अतिथेः निमित्तम् उत्तमं भोजनं सज्जीकारितवान् । बहिः वृष्टिः आसीत् । शीतलः वायुः वाति स्म । तदा रूपधरः वराहपालकम् उद्दिश्य - ''ट्रोय्-युद्धसमये कदाचित् एवम् अभवत् । रात्रौ वयं केचन मिटोमीट्रोयभित्तेः समीपे रक्षणार्थं गत्वा तत्रैव गुल्मप्रदेशे शयनं कृतवन्तः आस्म । तद्दिने अपि एवम् एव शीतलः वायुः वाति स्म । वातावरणमपि हिमाच्छादितम् आसीत् । आच्छादनार्थं मम समीपे आच्छादकम् अपि न आसीत् । अर्धरात्रे अहं रूपधरम् उत्थाप्य मम परिस्थितिं विवृतवान् । अनुक्षणं सः कश्चित् उपायं चिन्तितवान् । तत्रत्यान् सैनिकान् उत्थाप्य - 'अहं कश्चित् दुःस्वप्नं दृष्टवान् । अतः कृपया अनुक्षणं राराजसमीपं गत्वा इतोऽपि कांश्चन जनान् आनयन्तु' इति उक्तवान् । तदा कश्चन उत्थाय स्वस्य आच्छादकं तत्रैव त्यक्त्वा नौकायाः समीपं गतवान् । अहं तस्य सैनिकस्य आच्छादकस्य उपयोगं कुर्वन् रात्रिं यापितवान्'' इति उक्तवान् ।

तदा वराहपातकः - ''रोचककथाम् एव वदन् अस्ति खलु भवान् ! चिन्ता मास्तु । अद्य आच्छादनार्थं भवते एकम् उत्तमम् आच्छादकं ददामि । भवान् निश्चिन्ततया निद्रां कर्तुं शक्नोति'' इति उक्तवान् ।

शैत्यनिवारकचुल्याः समीपे उत्तमां शय्यां प्रसार्य शयनव्यवस्थां कृतवान् वराहपालकः । आच्छादनार्थं कम्बलमेकं दत्तवान् च । अतः रूपधरः सुखेन निद्रां कृतवान् । - (अनुवर्तते)



# र स वा र्ताः

## पुस्तकस्य पठनं न, श्रवणम् इदानीम्

साङ्केतिकतायाः अभिवृद्धेः अनन्तरं समाजस्य सर्वेषु क्षेत्रेषु विशिष्टाभिवृद्धिः जाता दृश्यते । पुस्तकक्षेत्रे इदानीम् इलेक्ट्रानिक्तन्त्रज्ञानस्य प्रवेशः अभिवृद्धिः च एषु दिनेषु दृश्यते । इदानीं पुस्तकानि मैक्रोफिल्म्मध्ये अङ्कयित्वा रक्ष्यन्ते । यदा पुस्तकस्य पुटाः द्रष्टव्याः भवन्ति तदा गणकयन्त्रस्य दृश्यफलके ते आनीयन्ते । एवम् इदानीं पुस्तकानां पठनकालः अतीतप्रायः, तत्स्थाने श्रवणकालः प्राप्तः अस्ति । कानिचन आकाशवाणीकेन्द्राणि ध्वनिरूपेण ग्रन्थानां प्रसारार्थम् अपि उद्युक्तानि दृश्यन्ते । यदि शक्यते तर्हि लेखकस्य कण्ठध्वनिना एव ग्रन्थं प्रसारयन्ति तानि । एषु दिनेषु मलयाळभाषीयस्य सि. राधाकृष्णवर्यस्य कथापुस्तकं दृश्यकोषरूपेण (विडियो) प्रकाशितम् अस्ति । आल्-इण्डिया–रेडियो-कलावित् काचित् एतस्य निमित्तं कण्ठदानं कृतवती अस्ति ।

## पुस्तकचोरः

इंग्लेण्ड्देशे सप्लेक्प्रदेशवासी डङ्कन्जेवोन्स्-नामकाय कस्मैचित् युवकाय मतीयं पारमार्थिकं च साहित्यं विशेषतः रोचते स्म । किन्तु तादृशानि पुस्तकानि क्रेतुं तस्य समीपे धनं न आसीत् । एतस्य परिहारार्थं तेन अन्विष्टः मार्गः नाम - चौर्यम् । नवदशे वयसि एव सः चौर्यम् आरब्धवान् । द्वात्रिंशत्तमे वयसि सः चौर्येण ५२,००० पुस्तकानि सङ्गृहीतवान् आसीत् । किन्तु कदाचित् तस्य एषा प्रवृत्तिः जनैः ज्ञाता अभवत् । आरक्षकाः तं गृहीतवन्तः । ततः प्राप्तानां १२,००० पुस्तकानां सघोषविक्रयणं कृतवन्तः च । तत्समये तत्र उपस्थितः अपि डङ्कन् तानि पुस्तकानि क्रेतुं न शक्तवान् । एतस्याः घटनायाः श्रवणात् मार्क्ट्वैन्वर्यस्य जीवनघटना काचित् स्मृतिपथम् आयाति । प्रख्यातस्य हास्यलेखकस्य तस्य गृहम् आगतः कश्चन अतिथिः गृहे भूमौ इतस्ततः विकीर्णानि पुस्तकानि दृष्ट्वा पृष्टवान् - ''एतानि कपाटिकायां कुतो न स्थापनीयानि ?'' इति । तदा मार्क्ट्वैन् शान्तस्वरेण उक्तवान् आसीत् - ''कपाटिकायाम् एतानि अवश्यं स्थापयितुं शक्यन्ते । किन्तु कपाटिकां कः दद्यात् इत्येव समस्या'' इति ।

## जन्मदिननिमित्तम् उपायनम्

अमेरिकाध्यक्षः अस्ति बिल् क्लिण्टन् । तस्य पत्नी हिल्लरी क्लिण्टन् । तयोः पुत्री चेल्सी । सा षोडशवर्षीया । तस्याः जन्मदिनस्य निमित्तं तिसृभिः स्वायत्ताभिः आकाशवाणीसंस्थाभिः त्रिविधानि कार्यानानि उपायनीकृतानि । यदा ताभिः उपायनानि गृहं प्रति प्रेषितानि तत्समये चेल्सी गृहे न आसीत् । विद्यालयं गतवती आसीत् सा । विद्यालयात् प्रत्यागमनानन्तरं तानि सा प्रत्यर्पितवती । तस्मिन् दिने सायं मातापितरौ तां सुप्रसिद्धे राष्ट्रियनाट्यमन्दिरे प्रदर्श्यमानस्य ख्यातेन लेखकेन विक्टर्ह्यूगोवर्येण लिखितस्य 'ले मिसरेबल्स्'नामकस्य नाटकस्य दर्शनार्थं नीतवन्तौ । षोडशसिक्थवर्तिकानां निर्वापणात्, जन्मदिननिमित्तकस्य केक्खाद्यस्य कर्तनात् च यावान् आनन्दः प्राप्येत ततोऽपि अधिकः आनन्दः प्राप्तः आसीत् तया ।




# विकृतघ्नः

दृढव्रतः त्रिविक्रमः स्वीकृतं कार्यं परित्यक्तुम् अनिच्छन् पुनरपि वृक्षस्य समीपं गतवान् । वृक्षम् आरुह्य शाखायां लम्बमानं शवं स्कन्धे आरोप्य अधः आगतवान् । ततः यथापूर्वं मौनं श्मशानाभिमुखं प्रस्थितवान् च । तदा शवान्तर्गतः वेतालः अवदत् – "अये राजन् ! भवतः एषः महान् परिश्रमः स्वनिमित्तम् उत अन्यनिमित्तम् इत्येव न ज्ञायते मया । भवान् कश्चन देशपालकः इत्यतः अन्यः देशपालकः भवन्तम् एतादृशे कार्ये प्रवर्तयितुं न अर्हति । क्वचित् पण्डिताः भवन्तं कार्ये प्रवर्तितवन्तः स्युः । यतः पाण्डित्येन पदजालेन वा अन्यस्य बन्धने तेषां विशेषरुचिः भवति । भवान् अपि रामशास्त्री इव अन्येन प्रयुक्ते पदजाले पतितः स्यात् इति भाति मम । रामशास्त्री कः, तस्य कथा का इति ज्ञातुं कुतूहलं स्यात् खलु भवतः ? तस्य कथां विस्तरेण

## वेतालकथा



श्रावयामि, श्रद्धया शृणोतु तावत्'' इति ।

अनन्तरं वेतालेन कथा आरब्धा -

पूर्वं रामशास्त्री नाम कश्चित् आसीत् । सः अल्पे एव वयसि शास्त्रादीनि अधीत्य 'पण्डितः' इति ख्यातिं प्राप्तवान् आसीत् । तस्य अपेक्षा आसीत् यत् मया तादृशं पाण्डित्यं प्राप्तव्यं, येन मत्तः श्रेष्ठः पण्डितः कोऽपि न भवेत् इति । सः कदाचित् गृहम् आगतवन्तं पितुः बाल्यस्नेहितं शम्भुशर्माणं स्वस्य आशयं निवेदितवान् । सः पितुः बाल्यस्नेहितः शास्त्रम् अधीतवान् आसीत् । अतः कांश्चन शास्त्रसम्बद्धान् प्रश्नान् पृष्ट्वा उत्तरं च ज्ञात्वा सः रामशास्त्रिणम् उक्तवान् - ''भवतः पाण्डित्यम् अस्ति इति तु सत्यम् एव । तत्रापि अल्पे वयसि एतादृशस्य पाण्डित्यस्य प्राप्तिः नितरां अपूर्वा । तथापि असदृशं पाण्डित्यं प्राप्तव्यं चेत् नूतनपदानां सृष्टिः भवता करणीया, तानि पदानि व्यवहारे आनेतव्यानि च '' इति ।

''तथा नूतनशब्दानां सृष्टौ अतिसमर्थः एतावता एव कोऽपि अस्ति वा ?'' इति पृष्टवान् रामशास्त्री ।

''कुतो न ? अस्माकं ग्रामे देवशास्त्री नाम कश्चित् अस्ति । सः नूतनशब्दानां निर्माणे अर्थावगमने च नितरां समर्थः । किन्तु क्वचित् तेन प्रयुज्यमानानां पदानाम् अर्थम् अवगन्तुं पण्डिताः अपि क्लेशान् अनुभवन्ति । राज्ञः सम्माननम् अपि प्राप्तम् अस्ति तेन'' इति उक्तवान् शम्भुशर्मा ।

''एवं तर्हि सः मया द्रष्टव्यः । तस्य पाण्डित्यं कीदृशम् इति ज्ञातव्यम्'' इति उक्तवान् रामशास्त्री ।

''भवतु नाम । अहं तस्य परिचयं कारयामि । यदि गूढार्थगर्भितस्य वाक्यस्य प्रयोगं भवान् करोति, यदि वा नूतनपदानि प्रयुज्य भवान् व्यवहरति, तर्हि सः भवन्तं शिष्यत्वेन अङ्गीकुर्यात् । तेन भवतः श्रेयः निश्चितम्'' इति उक्तवान् शम्भुशर्मा ।

एतत् अङ्गीकुर्वन् रामशास्त्री तेन सह प्रस्थितः । मार्गे तस्य मनसि एका एव चिन्ता - देवशास्त्रिणा कीदृश्या शैल्या सम्भाषणं करणीयम् इति ।

शम्भुशर्मणः अनुपमा नाम पुत्री आसीत् । सा रूपेण बुद्धिमत्तया च अनुपमा

एव । 'यदि मम पुत्र्याः रामशास्त्रिणः च परस्परपरिचयः भवेत्, यदि च तयोः सम्मतिः स्यात् तर्हि कालान्तरे तयोः विवाहः निर्वर्तनीयः' इति चिन्तनम् आसीत् शम्भुशर्मणः । अतः रामशास्त्रिणः अनुचरणार्थम् अनुपमां नियोजितवान् आसीत् सः।

रामशास्त्री तु स्वपाण्डित्यस्य प्रदर्शनं कथम् इत्येव सदा चिन्तयन् भवति स्म । अतः सः अनुपमायाः सौन्दर्यं पाण्डित्यं वा द्रष्टुं न शक्तवान् एव । तां सामान्यसेविकां भावयन् सः सर्वाणि कार्याणि ताम् आदिशति स्म ।

द्वित्राणां दिनानां अनन्तरं रामशास्त्री आतङ्कमिश्रितेन स्वरेण स्वगतम् इव उक्तवान् - "श्वः मया देवशास्त्री द्रष्टव्यः" इति ।

"स तु इदानीं ग्रामे नास्ति । दिनद्वयानन्तरं प्रत्यागच्छेत् सः" इति उक्तवती अनुपमा ।

"इतोऽपि दिनद्वयस्य प्रतीक्षा करणाया वा मया ! अहो, दिनानि युगायन्ते अत्र" इति खेदेन उक्तवान् रामशास्त्री ।

"किमर्थं तावती चिन्ता भवतः ? दिनद्वयात्मके अवधौ नूतनानि पदानि सृष्ट्वा व्यवहारे प्रयुज्य अनुभवं सम्पादयतु भवान्" इति उक्तवती अनुपमा ।

"सर्वाणि अपि नूतनपदानि मया झटिति अवगम्यन्ते एव । यतः तादृशम् अपूर्वं पाण्डित्यम् अस्ति मम । देवशास्त्री अपि



येषां पदानाम् अर्थं न जानीयात् तादृशानि पदानि प्रयोक्तुम् अपि सामर्थ्यम् अस्ति एव मम । अतः किम् अभ्यासेन ?" इति सगर्वम् उक्तवान् रामशास्त्री ।

तदा अनुपमा मन्दहासपूर्वकम् उक्तवती - "भवान् तु महापण्डितः । भवता सह सम्भाषणं करणीयम् इति मम इच्छा । दिनद्वयं सम्भाषणं कुर्वन्तौ कालं यापयाव" इति ।

"पण्डितस्य मम पण्डितेन सह एव सम्भाषणं शोभते । किं सामान्यैः सह व्यवहारेण?" इति पुनरपि गर्वेण एव उक्तवान् रामशास्त्री ।

"भवादृशानां निमित्तम् एव 'त्रिकृतघ्न'-नामकं पदं सृष्टम् अस्ति" इति कोप-



मिश्रितेन स्वरेण उक्त्वा खेदेन ततः निर्गतवती अनुपमा ।

अनुपमया प्रयुक्तं 'विकृतघ्नः' इत्येतत् पदं रामशास्त्रिणः पीडायै अजायत । बहुधा चिन्तनस्य अनन्तरम् अपि तेन न ज्ञातं यत् अनुपमया किमर्थं मयि 'विकृतघ्नः' इत्येतत् पदं प्रयुक्तम् इति । अतः सः अनुपमाम् आहूय पृष्टवान् - ''कृतघ्नताम् अकृतवति मयि विकृतघ्नः इति शब्दः प्रयुक्तः भवत्या । मया का कृतघ्नता आचारिता ?'' इति ।

''यदा भवान् अस्मद्गृहम् आगतवान् तदा आरभ्य मया भवतः सेवा कृता । भवतः प्रशंसा अपि कृता । एतस्य प्रतिफलं मया किं प्राप्तम् ? सेवा ससन्तोषं स्वीकृता भवता । न मम सौन्दर्यातिशयः लक्षितः । मम बुद्धिमत्ताम् अपरीक्ष्य एव भवता निर्णीतं यत् अहं सेवामात्रार्थम् अर्हा इति । उपकारस्मरणप्रवृत्तिः एव नास्ति भवतः । अतः भवान् विकृतघ्नः एव'' इति उक्तवती अनुपमा ।

''पुनः अपि मयि विकृतघ्नपदस्य प्रयोगः ! एतादृशं पदं लोके व्यवहारे नास्ति एव । कृतम् उपकारं यः विस्मरति सः उच्यते - कृतघ्नः इति । विकृतघ्नः इति पदं तु न प्रयुक्तपूर्वम्'' इति उक्तवान् रामशास्त्री ।

''भवान् कृतघ्नमात्रं न । अतः एव मया विकृतघ्नपदं प्रयुक्तम् । भवादृशानां निमित्तम् एव देवशास्त्रिणा एतत् पदं सृष्टम् अस्ति'' इति उक्तवती अनुपमा ।

विकृतघ्नशब्दः देवशास्त्रिणा सृष्टः इति श्रुत्वा रामशास्त्री निर्णीतवान् यत् एतस्य पदस्य विशिष्टार्थः कोऽपि अस्ति एव इति । अतः सः तस्य पदस्य अर्थस्य अवगमनार्थं बहुधा प्रयत्नं कृतवान् । तथापि अर्थः तु न अवगतः । अतः सः पुनरपि अनुपमां प्रार्थितवान् -''कृपया एतस्य पदस्य अर्थं वदतु'' इति ।

तदा अनुपमा उक्तवती - ''महापण्डितः भवान् एतस्य पदस्य अर्थम् इतोऽपि अवगन्तुं न शक्तवान् ? न हि सर्वः सर्वं जानाति इति श्रूयते । अतः भवतः साहाय्यार्थं वदामि । विरूपम् उद्दिश्य एतत् पदम् ऐदम्प्राथम्येन प्रयुक्तम् । अतः विरूपं

यदि भवान् द्रक्ष्यति तर्हि तस्य पदस्य अर्थस्य अवगमनं सुकरं स्यात्'' इति ।

''कोऽयं विरूपः नाम जनः ?'' इति पृष्टवान् रामशास्त्री ।

''विरूपः नाम कश्चन कृषिकः । सः कदाचित् निश्चितवान् यत् अल्पेन मूल्येन क्षेत्रं क्रेतव्यम् इति । तस्य समीपे धनं न आसीत् । तदा प्रतिवेशी शिवरामः ऋणरूपेण धनं दत्तवान् । तेन क्षेत्रं क्रीतवान् विरूपः । तस्मिन् क्षेत्रे तेन निधिः प्राप्तः । ततः शिवरामस्य ऋणं प्रत्यर्पितवान् विरूपः । अत्रान्तरे शिवरामस्य पुत्र्याः विवाहः निश्चितः । पुत्रीविवाहस्य निर्वर्तनार्थं विरूपम् ऋणं याचितवान् शिवरामः । तदा विरूपः दर्पेण उक्तवान् - ''निर्धनाय मया ऋणं न दीयते । निर्धनेन ऋणस्वीकारचिन्ता न करणीया अपि'' इति ।

पुनः कदाचित् क्षेत्रे कार्यं कुर्वाणः विरूपः सर्पेण दष्टः अभवत् । अनतिदूरे क्षेत्रे कार्यं कुर्वाणः शम्भुशरणः धावन् आगत्य विरूपं स्कन्धे आरोप्य मान्त्रिकस्य समीपं नीतवान् । 'यदि अल्पः विलम्बः कृतः स्यात् तर्हि एतस्य प्राणाः अपगताः अभविष्यन्' इति वदन् मान्त्रिकः योग्यया चिकित्सया विरूपम् उज्जीवितवान् ।

अनन्तरदिने शम्भुशरणः अपि सर्पेण दष्टः अभवत् । तत्समये विरूपः तेन एव मार्गेण गच्छन् आसीत् । यदा मान्त्रिकसमीपं शम्भुशरणस्य नयनस्य प्रस्तावः आगतः तदा - 'शम्भुशरणं स्कन्धे आरोप्य नेतुं मम



सामर्थ्यं नास्ति' इति उक्तवान् विरूपः । तदा शम्भुशरणस्य पत्न्या सूचितं यत् मान्त्रिकं विषयं निवेद्य तम् अत्र आनयतु इति । तदा विरूपः उक्तवान् 'अहम् उत्तरदिशि प्रस्थितवान् अस्मि । मान्त्रिकस्य गृहं तु दक्षिणदिशि अस्ति । अतः अहम् एतत् कार्यं कर्तुं न शक्नोमि' इति । तदा शम्भुशरणस्य पत्नी उक्तवती - 'एवं तर्हि भवान् अत्र रक्षकत्वेन तिष्ठतु । अहम् एव गत्वा मान्त्रिकम् आनेष्यामि' इति । 'न शक्यते एतत् । मया त्वरया अन्यत्र गन्तव्यम्' इति वदन् ततः निर्गतवान् विरूपः । ततः सौभाग्यवशात् मान्त्रिकः कस्माच्चित् वार्तां श्रुत्वा धावन् आगत्य शम्भुशरणस्य प्राणान् रक्षितवान् । एवम्



प्रष्टव्यम् इति यावत् सः चिन्तयन् आसीत् तावता मार्गपार्श्वे कलहायमानौ उभौ दृष्टौ । तयोः एकः दृढकायः मल्लः इव दृश्यते स्म । अपरः क्षीणकायः । दृढकायः क्षीणकायं कण्ठे गृहीत्वा प्रहरन् आसीत् । रामशास्त्री तयोः कलहं निवारयितुम् इच्छन् कलहस्य कारणं पृष्टवान् । तदा दृढकायः उक्तवान् - "श्रीमन्! एषः नद्यां पतितः सन् मज्जनं प्राप्नुवन् आसीत् । अहं प्राणापायम् अविगणय्य नद्यां तरन् एतस्य रक्षणं कृतवान् । एतत्सर्वं दिनद्वयात् पूर्वं प्रवृत्तम् । अद्य अहम् -'आरोग्यं कथम् अस्ति ?' इति प्रष्टुं यदा एतस्य समीपम् आगतवान् तदा एषः माम् अनभिजानन् - 'कः भवान् ?' इति पृष्टवान् । अहं दिनद्वयात् पूर्वं प्रवृत्तं स्मारितवान् । 'मया सा घटना एव न स्मर्यते' इति उक्तवान् एषः । 'भवान् सर्वथा बुद्धिहीनः' इति वदन् माम् उपहसितवान् अपि । एतादृशस्य अपि उपकारं कृतवान् अहं निश्चयेन बुद्धिहीनः एव । एतस्मिन् विवेकम् उत्पादयितुं मम बुद्धिमत्ता अपर्याप्ता । अतः एव देहदण्डनपूर्वकम् एतं विवेकं बोधयन् अस्मि" इति ।

रामशास्त्रिणा सर्वम् अवगतम् । 'एषः कृशकायः एव विरूपः स्यात्' इति चिन्तितवान् सः दृढकायम् उद्दिश्य - "मान्यवर ! किम् एतादृशे क्षीणकाये जने देहबलस्य प्रयोगेण ? एषः केनचित् विशेषकारणेन एवं व्यवहृतवान् स्यात् । तत् कारणं किम् इति ज्ञात्वा आगत्य अहं

अस्ति विरूपस्य पृष्ठभूमिका" इति उक्तवती अनुपमा ।

"एतं मनसि निधाय एव कृतघ्नपदं निर्मितम् इति भाति" इति उक्तवान् रामशास्त्री ।

"कृतघ्नपदं न, अपि तु विकृतघ्नपदम्" इति उक्तवती अनुपमा ।

"कृतम् उपकारं ये न स्मरन्ति ते कृतघ्नाः । विकृतघ्नः इत्यस्य पदस्य न कोऽपि अर्थः" इति उक्तवान् रामशास्त्री ।

"किम् अधिकचर्चया ? सकृत् भवान् तं विरूपं दृष्ट्वा आगच्छति चेत् सुष्ठु भवेत्" इति सूचितवती अनुपमा ।

रामशास्त्री विरूपं द्रष्टुं ततः प्रस्थितवान् । 'विरूपस्य गृहं कुत्र' इति



वदिष्यामि । अतः इदानीम् एतं परित्यज्य गच्छतु भवान्'' इति उक्तवान् ।

रामशास्त्रिणः मुखस्य तेजस्वितां दृष्ट्वा समाहितः सन् सः दृढकायः ततः निर्गतवान् । तदा रामशास्त्री तं क्षीणकायं पृष्टवान् -''भवान् एव खलु विरूपः ?'' इति ।

''भवान् मत्तः किम् इच्छति इति अहं न जानामि । अहं कः इति भवान् जानाति । किन्तु भवान् कः इति अहं न जानामि । तथा ज्ञातव्यम् इति इच्छा अपि नास्ति मम'' इति वदन् विरूपः ततः निर्गतवान् । दीर्घ निश्श्वस्य प्रतिगतवान् रामशास्त्री ।

''विरूपः दृष्टः खलु भवता ?'' इति पृष्टवती अनुपमा ।

''आम् । वार्तालापः अपि कृतः'' इति उक्तवान् रामशास्त्री । ततः सः प्रवृत्तं सर्वं निवेद्य अनुपमां पुनः उक्तवान् - ''विरूपस्य निन्दनार्थं कृतघ्नपदम् अपर्याप्तम् । अतः एव देवशास्त्रिणा विकृतघ्नपदं सृष्टम् अस्ति । विशेषेण यः कृतघ्नः भवति सः एव विकृतघ्नः । 'वि' इत्येतस्य उपसर्गस्य योजनात् कृतघ्नतायाः परा काष्ठा द्योतिता भवति । एवं ननु?'' इति ।

''शब्दार्थविषये सम्यक् एव चिन्तितं भवता । किन्तु विकृतघ्नपदस्य वास्तविकः अर्थः तु इतोऽपि न अवगतः'' इति हसन्ती उक्तवती अनुपमा ।

तावता तत्र आगतः शम्भुशर्मा रामशास्त्रिणम् उक्तवान् -''पाण्डित्येन अनुपमाम् अन्वर्थनामधेयाम् एतां मम पुत्रीम् एतावता भवान् अवगतवान् स्यात् इति अहं चिन्तयामि । वस्तुतः देवशास्त्री नाम कोऽपि नास्ति । भवतोः मेलनार्थम् एव मया देवशास्त्री सृष्टः आसीत्'' इति ।

एतत् श्रुतवान् रामशास्त्री आश्चर्येण ? ः सन् क्षणकालं मौनम् आश्रितवान् । ततः अनुपमाम् उद्दिश्य ''भद्रे, विकृतघ्नपदस्य वाच्यत्वं प्राप्तुम् अहं न इच्छामि । कृपया क्षाम्यतु माम्'' इति उक्तवान् ।

वेतालः एवं कथां समाप्य अवदत् ''राजन् ! शब्दाः स्वेच्छया स्रष्टुं शक्याः कदाचित् । किन्तु तत्पदवाच्यः कोऽपि पदार्थः अस्ति चेदेव तस्य सार्थकता ।

अन्यथा निरर्थकता । अनुपमा निरर्थकं कश्चित् शब्दं सृष्ट्वा तत् रामशास्त्रिणि प्रयोज्य 'भवान् पण्डितः न' इति परोक्षतया ज्ञापितवती । विकृतघ्नपदस्य प्रयोगं कुर्वती रामशास्त्रिणि भ्रमम् उत्पादितवती । किम् एतत् उचितम् ? अनुपमायाः व्यवहारः किं न्याय्यः ? किम् अनुपमा पाण्डित्येन रामशास्त्रिणम् अतिशेते ? रामशास्त्री किमर्थं क्षमायाचनं कृतवान् ? मम एतेषां सन्देहानां समाधानं जानन् अपि यदि भवान् न वदेत् तर्हि भवतः शिरः सहस्रधा भग्नं भवेत्'' इति ।

तदा मौनं स्थातुम् अशक्तः त्रिविक्रमः उक्तवान् - ''अनुपमा-रामशास्त्रिणोः पाण्डित्ये तारतम्यभावं न पश्यामि अहम् । रामशास्त्री पण्डितः, स्फुरद्रूपी, बन्धुश्च इत्यतः तस्य सेवां श्रद्धया कृतवती अनुपमा। किन्तु रामशास्त्री तस्याः वैशिष्ट्यम् अवगन्तुं न शक्तवान् । देवशास्त्रिणः पाण्डित्येन आत्मनः पाण्डित्यं तोलयन् सः अनुपमायाः पाण्डित्यं न लक्षितवान् एव । 'रामशास्त्रिणः पाण्डित्यम् अस्ति चेदपि लौकिकव्यवहारज्ञानं नास्ति' इति जानती अनुपमा तं परिष्कर्तुम् इच्छन्ती विरूपसमीपं प्रेषितवती । विरूपस्य व्यवहारं दृष्ट्वा तदीयां कृतघ्नतां ज्ञातवान् अपि रामशास्त्री स्वस्य कृतज्ञतारहितं व्यवहारं न अवगतवान् एव । 'यः कृतम् उपकारं केषाञ्चित् दिनानाम् अनन्तरं विस्मरति सः कृतघ्नः । यः कृतम् उपकारं तत्क्षणे एव विस्मरति सः विकृतघ्नः' इति अनुपमायाः चिन्तनम् । अतः एव सा विकृतघ्नपदं सृष्टवती, रामशास्त्रिणि प्रयुक्तवती च । देवशास्त्री नास्ति इति वदन् शम्भुशर्मा यदा आनयनोद्देशं विवृतवान् तदा रामशास्त्री कृतज्ञतारहितं स्वस्य व्यवहारम् अवगतवान् । ततः लज्जितः सः अनुपमां क्षमां प्रार्थितवान्'' इति ।

एवं वदता त्रिविक्रमेण मौनभङ्गः कृतः आसीत् । अतः शवान्तर्गतः वेतालः ततः अदृश्यः भूत्वा यथापूर्वं वृक्षस्य शाखाम् अवलम्बितवान् ।



# महाराष्ट्रभूमिः

रचना - मीरानायर्, चित्राणि - गौतमसेनः




जञ्जीरस्य दक्षिणदिशि सावित्रीनद्याः तीरे हरिहरेश्वरक्षेत्रम् अस्ति । एतत् क्षेत्रं 'दैवगृहम्'(देवगढ) इति निर्दिश्यते अपि । नदीतीरे स्थितानाम् आलयानां कारणतः एतत् तीर्थक्षेत्रं जातम् अस्ति । अतः एव यात्रास्थलम् अपि जातम् अस्ति । अत्रत्यस्य कालभैरवेश्वरस्य मन्दिरे बहूनि स्वयम्भूलिङ्गानि दृश्यन्ते । वर्षे एकवारम् अत्र कालभैरवेश्वरविग्रहः समीपस्थं ब्रह्म-विष्णु-महेश्वर-पार्वती-पर्वतं प्रति रथयात्रया नीयते ।

हरिहरेश्वरस्य दक्षिणदिशि बाङ्काट् अस्ति । अत्रत्यं दुर्गं १८ शतके निर्मितम् आसीत् । एतच्च दुर्गं प्रख्यातनौकादल-नायकस्य महाराष्ट्रियस्य कन्वोजि-अङ्ग्रेवर्यस्य प्रबलः आश्रयः आसीत् । १७५६ तमे वर्षे महाराष्ट्रियाः 'घेरिया'नामकस्य विजयदुर्गस्य विनिमयार्थम् एतत् दुर्गम् आंग्लेयेभ्यः समर्पितवन्तः । एवं पश्चिमभारते आंग्लेयैः ऐदम्प्राथम्येन प्राप्तं दुर्गम् एतत् एव । 'परिपटना' इति,



हरिहरेश्वरः

*सुप्रसिद्धः महाराष्ट्रियः राजनीतिनिपुणः नाना फडणवीस् । बाङ्काट्तः अनतिदूरे दक्षिणदिशि स्थिते वेलसुप्रदेशे एषः जातः ।*

कन्वोजीअङ्ग्रे



नानाफडणवीस्

'पलीपट्ने' इति वा निर्दिश्यमानं नौकास्थानकं बाङ्काद्तः दक्षिणदिशि अस्ति । पूर्वं कानिचन शतकानि यावत् एतत् नौकास्थानकं विशेषतः प्रसिद्धिं गतम् आसीत् । १४-१६ शतकयोः मध्यकाले एतत् दक्षिणकोङ्कणतीरप्रदेशे प्रमुखनौका-स्थानत्वेन परिगणितम् आसीत् । इतः मध्यधरासमुद्रं प्रति, पर्शियन्-सिन्धुप्रदेशान् प्रति च नौकाः गमनागमनं कुर्वन्ति स्म । 'दभीया'-नामिकायाः अरण्यदेवतायाः नाम्नः सम्बन्धात् एतस्य नगरस्य नाम अपि 'दाभोल्' इत्येव प्रसिद्धम् अभवत् ।



दक्षिणकोङ्कणतीरे 'सार्सनिक्'-वास्तुकलायाः उदाहरणभूतं सुन्दरं यवनमन्दिरम्, क्रि. श. ५५०-५७५ वर्षयोः मध्यकाले निर्मिता चन्द्रिकाभूः, भूगर्भमन्दिरं च प्राचीन-दाभोल्नगरस्य वैभवस्य द्योतकानि सन्ति । अत्र दाभोल्प्रदेशे एव अमेरिकादेशीया एन्रान्संस्था विद्युदुत्पादनकेन्द्रं निर्मातुं योजनां कृतवती अस्ति । यदि अत्र विद्युदुत्पादनकेन्द्रं निर्मितं भवेत् तर्हि महाराष्ट्रराज्यम् अधिकां विद्युतम् उत्पादयितुं शक्नुयात् ।

सुन्दरस्य कोङ्कणतीरस्य दक्षिणदिशि 'गणपतिपुले'नामकं नगरम् अस्ति । एतस्मिन् तीरे भल्लातकवृक्षाः नारिकेलवृक्षाः, आम्रवृक्षाः च प्राधान्येन दृश्यन्ते । एतस्मिन् नगरे स्थितं गणपतिमन्दिरं सुप्रसिद्धम् अस्ति । अत्रत्यः गणपतेः विग्रहः 'स्वयम्भूः' (स्वयम् उद्भूतः, न केनापि



बालगङ्गाधरतिलकः

निर्मितः) इति जनानां विश्वासः अस्ति । एषः विग्रहः ४०० वर्षेभ्यः पूर्वं कस्यचित् पर्वतस्य मूले प्राप्तः आसीत् ।

एतं देवालयं प्रति प्रतिदिनं सहस्रशः जनाः आगच्छन्ति । 'अङ्गारचतुर्थी'नामके उत्सवदिने तावत् भक्ताः आदिनम् उपवासम् आचरन्तः चन्द्रोदयानन्तरं नैवेद्यरूपेण मोदकं समर्प्य उपवासव्रतं समापयन्ति ।

कोङ्कणतीरप्रदेशे 'कोकम्'नामकं रसयुक्तम् आम्लरुचिसमेतम् आम्रफलम् आधिक्येन वर्ध्यते । एतेषां फलानाम् उपयोगेन निर्मितं 'कोकम्पानकम्' नाम पेयं पिपासानिवारणार्थं आधिक्येन उपयुज्यते अत्र । आम्रफलानि अस्माकं देशे सर्वत्र प्राप्यन्ते एव । तथापि एतत्प्रदेशे प्राप्यमाणः 'अल्पोन्सो'जातीयम् आम्रफलं श्रेष्ठत्वेन अद्वितीयम् अस्ति ।

रत्नगिरिः किञ्चन नौकास्थानकम् । बालगङ्गाधरतिलकस्य स्मारकं मन्दिरम् अत्र अस्ति । प्रख्यातः स्वातन्त्र्ययोद्धा बालगङ्गाधरतिलकः १८५६ तमे वर्षे जुलैमासस्य २३ तमे दिनाङ्के अत्र जन्म प्राप्तवान् आसीत् । रत्नगिरितः अनतिदूरे दक्षिणदिशि कोङ्कणतीरे जलदुर्गनामकं विजयदुर्गम् अस्ति । पूर्वं सिन्धुदुर्गं यथा तथा एतत् जलदुर्गम् अपि प्रमुखनौका-स्थानकत्वेन उपयुज्यते स्म महाराष्ट्रियैः ।

*अल्पोन्सोजातीयम् आम्रम्*

घोरियानामकः शिवाजिविजयं निमित्तीकृत्य एतस्य दुर्गस्य नाम विजयदुर्गम् इति कृतवान् । समुद्रतरङ्गाणां निरन्तरस्पर्शतः एतस्य पश्चिमभित्तिः शिथिलावस्थां गता अस्ति । दुर्गस्य अन्यः भागः इदानीम् अपि सुस्थितौ अस्ति ।

विजयदुर्गात् अनतिदूरे दक्षिणदिशि



*जलदुर्गनाम्ना प्रसिद्धं शिवाजेः विजयदुर्गम् ।*



माल्वान्-नौकास्थानकम् अस्ति । पूर्वम् एतत् नौकास्थानं वाणिज्यार्थं विशेषतः उपयुज्यते स्म । इदानीम् एतत् लवणनिर्माणकेन्द्रत्वेन, पाककलाकेन्द्रत्वेन च ख्यातम् अस्ति । 'कोको'तः निर्मीयमाणस्य 'सोल्कडी'नामकस्य खाद्यस्य निमित्तं, शुष्कनारिकेलस्य मिश्रणेन सज्जीकृतस्य मीनमयस्य उपसेचनस्य निमित्तं च एषः माल्वान्प्रदेशः प्रसिद्धः अस्ति । इक्षुरसस्य स्वीकारानन्तरम् इक्षुदण्डावशेषः यः भवति ततः निर्मीयमाणाः 'वडेसगूडी'–नामिकाः रोटिकाः मांसाहारप्रियाणां माल्वान्जनानां प्रियः आहारः । इतः किलोमीटर्दूरे सिन्धुदुर्गम् अस्ति, यच्च शिवाजिना स्वहस्ताभ्याम् एव निर्मितम् इति श्रूयते । मराठावीरस्य शिवाजिमहाराजस्य नाम्ना अत्र एकः वस्तुसङ्ग्रहालयः निर्मितः अस्ति । अत्रत्ये कस्मिंश्चित् स्तूपे शिवाजेः पादमुद्राभिः हस्तमुद्राभिः च युक्तानि अमृतशिला-फलकानि सन्ति । शिवाजिमहाराजस्य निमित्तं स्थितम् अद्वितीयं मन्दिरम् एतत् । प्रतिदिनम् एतस्य विग्रहस्य शिरसि रजतमयं मुकुटं धार्यते । विशेषोत्सवदिने तावत् सुवर्णमुकुटं धार्यते ।

*वडेसगूडी*

महाराष्ट्रस्य समुद्रतीरस्य अन्ते गोवासमीपस्थं 'वङ्गूर्ल्'नामकं तीरनगरम् अस्ति । पूर्वम् एतत् नगरम् इक्षुदण्ड-भल्लातकादीनां वाणिज्यकेन्द्रम् आसीत् । १६६४-१८१२ वर्षयोः मध्यकाले एतत् नगरं बहुवारं समुद्रचोराणां चौर्यस्य विषयः आसीत् । महाराष्ट्रियाः, मोगलजनाः च एतत् नगरं द्विवारम् अग्निसात्कृतवन्तः आसन् ।

वङ्गूर्ल्नगरं वस्तुतः सिकतामयीभिः भूमिभिः लघुपर्वतैः च युक्तः प्रदेशः । नारिकेलोद्यानानि, पनसोद्यानानि, आम्रोद्यानानि च अत्र प्राधान्येन दृश्यन्ते । श्रीदेवीसतेरीमन्दिरं रामेश्वरमन्दिरं च अत्र बहुप्रसिद्धम् अस्ति ।

*शिवाजिविग्रहः*





*सिन्धुदुर्गम्*



# वृत्तिः प्रवृत्तिः च

पूर्वं राजा प्रतापवर्मा विजयनगरं परिपालयति स्म । तस्य आस्थाने विविधक्षेत्रेषु अत्यन्तं समर्थाः केचन जनाः आसन् । तेषु वैद्यः पण्डरीनाथः अन्यतमः आसीत् । सः यं कमपि रोगं क्षणार्धे एव निवारयितुं सामर्थ्यं प्राप्तवान् आसीत् । अतः सर्वे जनाः 'धन्वतरिः' इति तस्य प्रशंसां कुर्वन्ति स्म । बहुवारं महाराजः तस्य परिवारीयाः च ततः उपकारं प्राप्य तं सत्कृतवन्तः आसन् ।

आशुकवितारचने अष्टावधानकरणे च महत् कौशलं प्राप्तवान् कविः रामदेवः अपि राज्ञः आस्थाने अन्यतमः आसीत् ।

एकदा पार्श्वराज्यतः केचन कवयः प्रतापवर्माणं द्रष्टुं विजयनगरम् आगतवन्तः । तस्मिन् दिने अस्वास्थ्य-कारणतः कविः रामदेवः आस्थानं न आगतवान् आसीत् । प्रतापवर्माणः कविसम्मेलने महती प्रीतिः आसीत् । परन्तु रामदेवः नास्ति इति कारणतः महाराजस्य निरुत्साहः जातः ।

पार्श्वदेशीयाः कवयः महाराजस्य पुरतः स्वपाण्डित्यं प्रदर्श्य उक्तवन्तः - "महाराज ! भवतः आस्थाने विद्यमानस्य रामदेवस्य प्रतिभायाः विषये वयं श्रुतवन्तः आस्म । किन्तु अद्य सः अस्वस्थः इति वार्ता ज्ञाता । तस्य उत्तराधिकारी कोऽपि भवतः आस्थाने भवेत् एव खलु । तस्य वा कवितां श्रोतुम् अवकाशं कल्पयतु कृपया" इति ।

महाराजस्य आज्ञानुसारं द्वित्राः कवयः कविताावाचनं कृतवन्तः । परन्तु प्रकाशवर्मा तेषां कविताावाचनं न इष्टवान् । 'अद्य मम आस्थानस्य गौरवं धूलिसात् भविष्यति' इति चिन्तयतः तस्य मुखं म्लानं जातम् । तदा आस्थानवैद्यः पण्डरीनाथः उत्थाय



इति अहं न ज्ञातवान् एव'' इति ।

तदा पण्डरीनाथः विनयेन उक्तवान् - ''महाराज ! अहं तु वृत्त्या वैद्यः, तथापि कवितालेखने मम विशेषाभिरुचिः अस्ति । यदा समयः लभ्यते तदा कवितारचनायां प्रवृत्तः भवामि । परन्तु अहं महान् कविः तु न'' इति ।

प्रतापवर्मा तत् अनङ्गीकुर्वन् - ''यः अभिरुच्यनुगुणं वृत्तिं करोति सः कार्यं साधयितुं शक्नोति एव । अतः भवान् वैद्यवृत्तिं त्यक्त्वा इतःपरं काव्यरचनायां प्रवृत्तः भवतु'' इति उक्तवान् । अनन्यगतिकतया पण्डरीनाथः राज्ञः एतत् वचनम् अङ्गीकृतवान् ।

केषाञ्चित् दिनानाम् अनन्तरं महाराजस्य पृष्ठस्य उपरि एकः व्रणः जातः । तदा पण्डरीनाथः कविसम्मेलनार्थं पार्श्वराज्यं गतवान् आसीत् । पण्डरीनाथस्य शिष्याः महता प्रयत्नेन अपि महाराजस्य व्रणं निवारयितुं न शक्तवन्तः ।

महाराजस्य वेदनां द्रष्टुम् अशक्तः कविः रामदेवः महाराजसमीपम् आगत्य उक्तवान् - ''प्रभो, अहं किञ्चित् वैद्यकीयं जानामि । चिकित्सां कर्तुं प्रयत्नं करोमि वा ?'' इति ।

तादृशवेदनायाम् अपि प्रतापवर्मा आश्चर्येण रामदेवं पश्यन् अङ्गीकारपूर्वकं शिरः चालितवान् । अनुक्षणमेव रामदेवः वाटिकां गत्वा एकं लघु सस्यम् आनीय खण्डशः कर्तितवान् । तस्य पेषणं कृत्वा

पृष्टवान् - ''महाराज ! यदि भवान् अनुमतिं ददाति तर्हि काव्यविषये मयि विद्यमानाम् आसक्तिं पार्श्वराज्यस्य कवीनां पुरतः प्रदर्शयितुम् इच्छामि'' इति ।

प्रतापवर्मा क्षणं यावत् पण्डरीनाथम् आश्चर्येण दृष्ट्वा अङ्गीकारपूर्वकं शिरः चालितवान् । आत्मना कृतानां विभिन्नतां नूतनप्रयोगाणां साहाय्येन अन्यान्यविषयान् अधिकृत्य कविताः श्रावितवान् पण्डरीनाथः । तद् श्रुत्वा सर्वे कवयः उच्चैः करताडनं कृतवन्तः ।

राजा प्रतापवर्मा अन्यकवीन् इव पण्डरीनाथम् अपि सत्कृतवान् । तेषां गमनानन्तरं राजा पण्डरीनाथं पृष्टवान् - ''काव्यक्षेत्रे भवतः एतावती प्रतिभा अस्ति

सज्जीकृतेन औषधेन महाराजस्य पृष्ठे विद्यमानं व्रणस्थलं लेपितवान् । अनन्तरं वस्त्रेण बद्धवान् च । आश्चर्यं नाम अनन्तरदिने एव व्रणः अदृश्यः जातः । एतत् दृष्ट्वा महाराजः नितरां सन्तुष्टः अभवत् ।

सः रामदेवम् आलिङ्ग्य - "वैद्यकीये भवतः एतावत् पाण्डित्यम् अस्ति । एवं स्थिते अपि भवान् कवितां लिखन् वृथा कालहरणं कुर्वन् अस्ति खलु ! इतः परं भवान् वैद्यकीयवृत्तिम् एव करोतु" इति उक्तवान् ।

तदा रामदेवः उक्तवान् - "भवतु महाराज ! मया वाटिकायां वर्धिताः वृक्षाः अपि औषधसम्बद्धाः एव । यदा आस्थानम् आगच्छामि तदा कविताः लेखिष्यामि, गृहं प्रति गमनानन्तरं मम चिन्तनं वैद्यकीयस्य उपरि भविष्यति" इति ।

"भवान् एतं विषयम् अद्यपर्यन्तं मां न उक्तवान् एव खलु ! इतः परं वैद्यकीयविषये अध्ययनं भवतु भवतः" इति उक्तवान् प्रतापवर्मा ।

केषाञ्चित् दिनानाम् अनन्तरं युवकवीनां गणः प्रतापवर्मणः राज्यम् आगतः । महाराजः कविसम्मेलनम् आयोजितवान् । परन्तु इतोऽपि विद्यार्थिदशायां विद्यमानानां तेषां युवकवीनां प्रतिभायाः पुरतः पण्डरीनाथस्य प्रतिभा अपर्याप्ता जाता । तदा रामदेवः झटिति उत्थाय कविभिः पृष्टानां प्रश्नानाम् उत्तरं सुलभतया उक्तवान् । स्वपाण्डित्येन तान् हतप्रभान् कृतवान् च । एषः विषयः महाराजस्य



आश्चर्याय जातः ।

सप्ताहानन्तरं महाराजस्य पुत्रस्य ज्वरः आगतः । तदा महाराजः रामदेवम् आहूतवान् । सः विभिन्नसस्यैः सज्जीकृतम् औषधं दिनद्वयं राजकुमाराय दत्तवान् चेदपि राजकुमारस्य ज्वरः न्यूनः न जातः । एतं विषयं ज्ञात्वा पण्डरीनाथः अन्तःपुरम् आगतवान् । स्वसमीपे विद्यमानायाः पेटिकातः एकां गुलिकां स्वीकृत्य राजकुमारस्य मुखे स्थापयित्वा जलं पायितवान् । ततः घण्टाभ्यन्तरे राजकुमारस्य ज्वरः न्यूनः जातः । दशघण्टाभ्यन्तरे राजकुमारः पूर्णतया स्वस्थः जातः ।

एषा घटना महाराजे आश्चर्यम् अजनयत् । सः मन्त्रिणं स्वसंशयान् उक्तवान् ।

तदा मन्त्री महाराजम् उक्तवान् – ''महाराज ! पण्डरीनाथेन वैद्यकीयशास्त्रम् अधीतम् । परन्तु तस्य अभिरुचिः काव्यलेखने अस्ति । रामदेवस्य प्रतिभा पाण्डित्यं च काव्यलेखने अस्ति । परन्तु वैद्यकीये तस्य आसक्तिः अस्ति । अभिरुच्यनुगुणं प्रावीण्यं भवेत् इति कुत्रापि नियमः नास्ति । यतः वृत्तिः बुद्धिसम्बद्धः विचारः । अभिरुचेः तु मनसः सम्बन्धः अस्ति । बुद्धिशक्तेः मनसः च परस्परं समन्वयं कृत्वा प्रवृत्तिसम्बद्धं कार्यं केचन एव समर्थतया निर्वहन्ति । परन्तु अस्मिन् विषये सर्वे समर्थाः न भवन्ति इत्यत्र रामदेवः, पण्डरीनाथः च निदर्शनम्'' इति ।

एतत् श्रुत्वा महाराजः स्वदोषं ज्ञातवान् । सः पण्डरीनाथं रामदेवं च आहूय – ''अभिरुच्यनुगुणं वृत्तिः क्रियताम्'' इति सूचयित्वा – ''भवतोः हितं करोमि इति चिन्तितवान् आसम् । परन्तु इदानीम् अहं मम दोषं ज्ञातवान् अस्मि । इतःपरं यथापूर्वं भवद्भ्यां स्ववृत्तिः आश्रयणीया । यदा समयः भवति तदा अभिरुच्यनुगुणस्य कार्यस्य विषये चिन्तयितुं शक्यते'' इति उक्तवान् ।





# ग्रामप्रमुखत्वम्

श्रीरसागरपुरनामकस्य ग्रामस्य प्रमुखः हरिश्चन्द्रः । वार्धक्यकारणतः सः ग्रामप्रमुखत्वं पुत्राय श्रीरामाय अर्पितवान् । तत्समये सः पुत्रम् उक्तवान् - ''वत्स ! 'ग्रामे क्षामः चेदपि ग्रामप्रमुखस्य गृहे सुभिक्षा' इति किञ्चन आभाणकं श्रूयते । वस्तुस्थितिम् आधारीकृत्य एव निर्मितम् एतत् । न्यायान्यायविषये अधिकं न चिन्तनीयं ग्रामप्रमुखेण । किन्तु धनसम्पादनार्थं सर्वकारस्य वञ्चना तु कदापि न करणीया । यतः तथा करणम् उद्योगनाशाय भवेत् । ग्रामे ये सामान्याः कृषिकाः भवन्ति ततः उपायेन धनं प्राप्य सुखम् अनुभवेत् ग्रामप्रमुखः । एतत् जीवनरहस्यं यः जानाति सः कदापि कष्टं न अनुभवति'' इति ।

एतत् श्रुत्वा श्रीरामः अङ्गीकारपूर्वकं शिरः चालितवान् । ततः कानिचन दिनानि अतीतानि । कदाचित् वीरभद्रः कृषिकः श्रीरामसमीपम् आगत्य - ''श्रीमन् ! मम एकरपरिमितं कृषिक्षेत्रम् अहं विक्रेतुम् इच्छामि । तत्र आनुकूल्यं यथा स्यात् तथा भवता क्षेत्रस्य मापनं कारणीयम् । एतत्सम्बन्धे 'प्रतिवर्षं विनालोपं करः दत्तः' इति पत्रं दातव्यं च'' इति प्रार्थितवान् ।

श्रीरामः गणनापुस्तकम् उद्घाट्य वीरभद्रस्य गणनां परिशीलितवान् । तत्र करदानं न उल्लिखितम् आसीत् । ततः श्रीरामः प्राप्तिपत्रपुस्तकं परिशीलितवान् । तत्र 'वीरभद्रः प्रतिवर्षं करं दत्तवान् अस्ति' इत्यत्र प्रमाणम् आसीत् । 'कथम् एषः लोपः जातः ?' इति बहुधा चिन्तनानन्तरम् अपि न ज्ञातवान् श्रीरामः । करम् अदत्तवताम् आवल्याम् अपि वीरभद्रस्य नाम दृश्यते स्म । एतत्सर्वं दृष्ट्वा 'अहो अव्यवस्था !' इति स्वगतं वदन् श्रीरामः

''सुभद्रा''



यथा न पीडयेयुः तथा कर्तुं वयम् अल्पक्षेत्रवतां कृषिकाणाम् आवलीं रचयामः । अधिकारिणः वदामः यत् निर्धनानां पीडा राज्ञः अपमानाय भवेत् इति कारणतः वयं करदानविषये निर्धनान् न पीडयामः इति । किञ्चिद् धनम् उपायनरूपेण अधिकारिभ्यः दद्मः अपि । एवम् अस्माकं व्यवहारः निर्विघ्नं प्रचलति । एतत् एव वृत्तिरहस्यम्'' इति ।

एषः क्रमः श्रीरामाय न अरोचत । वीरभद्रस्य क्षेत्रस्य मापनं योग्येन क्रमेण कृत्वा – 'एतत् क्षेत्रं करमुक्तम् अस्ति' इति लिखित्वा दत्तवान् । एतेन शिवरामः क्षेत्रक्रयणे कमपि क्लेशं न अनुभूतवान् । एतस्य प्रतिफलरूपेण वीरभद्रः शिवरामः च किञ्चित् धनं समर्पितवन्तौ । श्रीरामाय कृतज्ञतां समर्प्य ततः निर्गतवन्तौ च ।

श्रीरामः तु पित्रा अनुसृतं मार्गं स्वयम् अनुसर्तुं न इच्छति स्म । किन्तु योग्यमार्गस्य आश्रयणात् पितुः अपकीर्तिः भवेत् इति भीतिः तस्य । अतः इतिकर्तव्यतां निर्णेतुम् अशक्नुवन् सः अनन्यगतिकतया पित्रा अनुसृतं मार्गम् एव अनुसृतवान् । एवम् एव दिनानि गतानि ।

अथ कदाचित् श्रीरामस्य पिता हरिश्चन्द्रः दिवङ्गतः । श्रीरामः पितुः उत्तरक्रियां यथाविधि निर्वर्तितवान् । अस्थिविसर्जनार्थं काशीं प्रति प्रस्थितवान् च । एवं प्रवास-समये ग्रामव्यवस्थाकार्यम् उत्तराधिकारिणे कस्मैचित् दातव्यं भवति स्म ।

पितुः समीपं गत्वा वस्तुस्थितिं निवेदितवान् ।

तदा उच्चैः हसन् उक्तवान् हरिश्चन्द्रः – ''ग्रामप्रमुखत्वं नाम एतत् एव ! न केवलं वीरभद्रः, अपि तु बहवः अन्ये अपि करम् अदत्तवताम् आवल्यां सन्ति । किन्तु ग्रामे आढ्यत्वेन प्रसिद्धाः रङ्गनाथ-सोमभद्रादयः करं न दत्तवन्तः चेदपि करम् एव अदत्तवताम् आवल्यां तेषां नाम नास्ति । धनिककृषिकाः उच्चाधिकारिभिः पीडिताः न भवेयुः इति उद्देशेन वयं तेषां गणनायां धनदानस्य उल्लेखं प्रदर्शयामः । एतस्य प्रतिफलरूपेण धनिककृषिकाः यत् उत्कोचं यच्छन्ति ततः अस्माकं भोगजीवनं प्रचलति । अधिकारिणः सामान्यकृषिकान्

श्रीरामः स्वस्य दायादाय नागेशाय ग्रामव्यवस्थाभारं तात्कालिकतया अर्पयित्वा काशीं प्रति गतवान् । नागेशस्य प्रबला इच्छा आसीत् यत् ग्रामप्रमुखत्वं मया एव शाश्वतरूपेण प्राप्तव्यम् इति । अतः सः धनिककृषिकान् मेलयित्वा उक्तवान् – ''यद्यपि भवद्भिः करः न दत्तः तथापि भवतां गणनायां लिखितम् अस्ति यत् भवद्भिः सर्वैः करः दत्तः अस्ति इति । अतः भवद्भिः करः दातव्यः नास्ति एव । निर्धनकृषिकाः यद्यपि करं दत्तवन्तः, किन्तु तेषां गणनायाम् एतत् करदानं न उल्लिखितम् अस्ति । श्रीरामः एव एतस्य कारणम् । श्रीरामस्य एतम् अव्यवहारम् अहं प्रकटयिष्यामि । भवन्तः साक्ष्यं वदन्तु । तदा श्रीरामः उद्योगात् च्युतः भविष्यति । तत्र अहं नियुक्तः भविष्यामि । मम नियुक्तेः अनन्तरम् अहं भवताम् उपकारं करिष्यामि'' इति । बहवः धनिककृषिकाः एतत् अङ्गीकृतवन्तः ।

मासद्वयानन्तरं श्रीरामः यदा काशीतः प्रत्यागतः तदा ग्रामे अपप्रचारध्वनिं श्रुतवान् । 'यदि मम व्यवहारे प्रामाणिकता न भवेत् तर्हि एतादृशः अपायः तदा तदा आपतेत् एव । अतः एतत्सन्दर्भे उपायेन आत्मनः रक्षणं कृत्वा अग्रे ऋजुमार्गः आश्रयणीयः' इति निश्चित्य ग्रामे वार्ता प्रसारितवान् यत् येषां समीपे करदानसम्बद्धं प्राप्तिपत्रम् अस्ति, ते मत्समीपम् आगत्य तत् प्रदर्श्य गणनायाम् उल्लेख्य गच्छेयुः । यैः प्राप्तिपत्रं न प्रदर्श्यते तैः करः न दत्तः इति परिगण्यते । तेभ्यः करधनं दण्डधनं च



बलात् स्वीक्रियते इति ।

एतत् श्रुत्वा सर्वे निर्धनकृषिकाः प्राप्तिपत्रं प्रदर्श्य करदानं स्वगणनापुस्तके उल्लेख्य गतवन्तः । धनिककृषिकाणां समीपे प्राप्तिपत्रं न आसीत् । अतः ते सर्वे श्रीरामविषये कोपं प्राप्तवन्तः ।

श्रीरामः करम् अदत्तवतः धनिक-कृषिकान् मेलयित्वा उक्तवान् -"भवद्भिः करः दत्तः अस्ति इति गणनापुस्तके उल्लेखः अस्ति चेदपि प्राप्तिपत्रस्य अप्रदर्शनतः स च उल्लेखः अप्रमाणीकृतः एव तिष्ठति । अन्यच्च पूर्वं भवन्तः इक्षुसस्यानि वर्धयन्तः अपि पुस्तके कदलीसस्यम् आरोपितम् इति लेखितवन्तः । एतत्सर्वं यदि अहं प्रकाशयिष्यामि तर्हि भवतां धनस्य मानस्य च हानिः भवेत् । एतस्मात् यदि भवन्तः रक्षणम् इच्छन्ति तर्हि मह्यं किञ्चित् धनं यच्छन्तु, इतः परं प्रतिवर्षं योग्यं करं यच्छन्तु च । पूर्वतनः व्यवहारः भवतः सर्वान् यथा न बाधेत तथा अहं करिष्यामि । मद्विरुद्धं यदि भवन्तः आचरन्ति तर्हि योग्यं फलं प्राप्स्यन्ति" इति ।

ग्रामप्रमुखस्य विरोधम् अनिच्छन्तः धनिककृषिकाः किञ्चित् धनम् उपायनरूपेण अर्पयित्वा तस्य वर्षस्य योग्यं करं दत्त्वा प्राप्तिपत्रं प्राप्तवन्तः । ग्रामे सभाम् आयोज्य ग्रामप्रमुखस्य प्रामाणिकतायाः प्रशंसां कृतवन्तः च ।

निर्धनकृषिकाणां गणनायां करदानस्य उल्लेखः कृतः आसीत् खलु श्रीरामेण । तन्निमित्तं यावत् धनं सर्वकाराय दातव्यम् आसीत् तावत् उपायनरूपेण धनिक-कृषिकेभ्यः प्राप्तम् आसीत् तेन । अतः विशेषक्लेशं विना एव 'सर्वविधैः अपि जनैः करः दत्तः अस्ति' इति गणनापुस्तके उल्लिखितवान् सः ।

एवं तस्मिन् वर्षे करसङ्ग्रहे वृद्धिः दृष्टा । अतः अधिकारिणः श्रीरामविषये सन्तुष्टाः अभवन् । श्रीरामः तु ततः आरभ्य ऋजुव्यवहारम् एव आश्रयन् जनप्रियतां सुखं च प्राप्तवान् ।






द्वारकायां कृष्णः राज्यभारस्य समग्रं कार्यं वसुदेवे निक्षिप्तवान् । ततः धर्मराजेन क्रियमाणस्य यागस्य निमित्तम् आवश्यकानि वस्तूनि, रत्नानि, धन-धान्यानि च स्वीकृत्य रथम् आरुह्य इन्द्रप्रस्थम् आगतवान् च ।

कृष्णं दृष्ट्वा धर्मराजः सन्तुष्टः सन् - ''राजसूययागार्थं भवतः साहाय्यम् आवश्यकम् । अतः यागकरणार्थम् अनुमतिं ददातु । अथवा यागदीक्षां भवान् एव स्वीकरोतु'' इति उक्तवान् ।

तदा कृष्णः - ''धर्मराज, साम्राज्यस्य पालनं कर्तुं भवान् एव समर्थः । अतः यागं भवान् एव करोतु । भवता सूचितानि सर्वविधानि कार्याणि अहं करिष्यामि'' इति उक्तवान् ।

धर्मराजः सन्तोषेण सहदेवम् आहूय - 'यागार्थं सर्वविधसज्जतां करोतु । चातुर्वर्णीयान् अपि आह्वयतु'' इति उक्तवान् ।

नकुलम् आहूय - ''हस्तिनापुरतः भीष्मं, धृतराष्ट्रं, द्रोणं, कृपम्, अश्वत्थामानं, दुर्योधनं च आहूय आगच्छतु'' इति सूचितवान् ।

सहदेवः सूचितानि सर्वाणि कार्याणि व्यवस्थितरूपेण निरूढवान् । निश्चितं यागं विनालोपं कर्तुं नकुलः हस्तिनापुरतः कौरवप्रमुखान् आनीतवान् । धर्मराजः तान् सङ्कल्पितस्य कार्यस्य विवरणम् उक्तवान् । तेषु कृपाचार्याय दानादिकरणस्य, दुश्शासनाय भोजनप्रबन्धस्य, अश्वत्थाम्ने ब्राह्मणानां सत्कारस्य, सञ्जयाय राज्ञां

''शिशुपालवधम्''



सत्कारस्य, दुर्योधनाय अतिथिभिः आनीतानाम् उपायनानां सङ्ग्रहणस्य सर्वविधकार्याणां निर्वहणस्य भीष्मद्रोणयोः च दायित्वं दत्तवान् । स्वयं यज्ञदीक्षां स्वीकृतवान् । राजसूययागार्थम् आगतेषु बहवः मयसभायाः दर्शनेच्छया एव आगताः आसन् । राजानः बहूनि उपायनानि आनीतवन्तः आसन् । यागसमये अविरतं भोजनव्यवस्था उपकल्पिता आसीत् । यागः महता वैभवेन सम्पन्नः । तदा भीष्मः धर्मराजम् उद्दिश्य – ''सात्त्विकः, ऋत्विक्, सद्गुरुः, प्रियः, राजा, जितेन्द्रियः च यः भवति सः पूजार्हः भवति इति श्रूयते । तादृशस्य सत्त्वयुतस्य चयनं कृत्वा भवता पूजा करणीया'' इति उक्तवान् ।

''तादृशः कः इति भवान् वदति चेत् अहं तस्मै अर्घ्यादिकं समर्प्य पूजयिष्यामि'' इति उक्तवान् धर्मराजः ।

भीष्मः विचिन्त्य – ''एतस्यां सभायाम् अग्रपूजार्थम् अर्हः पुरुषोत्तमः कृष्णः एकः एव'। अतः तस्मै प्रथमार्घ्यं ददातु'' इति उक्तवान् ।

सन्तुष्टः धर्मराजः भीष्मस्य सूचनानुसारं सहदेवम् आहूय 'प्रथमम् अर्घ्यं कृष्णाय ददातु' इति सूचितवान् । यदा सहदेवः कृष्णाय अर्घ्यं दत्तवान् तदा श्रीकृष्णः आनन्देन स्वीकृतवान् ।

एतत् दृष्ट्वा शिशुपालः अनङ्गीकारपूर्वकं कृष्णं दूषयन् धर्मराजम् उद्दिश्य – ''धर्मराज, एतावन्तः राजानः, महापुरुषाः च अत्र सन्ति । एवं सति यादवाय कृष्णाय प्रथमम् अर्घ्यं किमर्थम् ? एषः न ज्येष्ठः, न वा भवतां गुरुः, वेदपारायणः वा । अस्मिन् कः उत्तमः अंशः भवता दृष्टः ? भवते कृष्णस्य विषये सूचनां दत्तवान् खलु भीष्मः । सः एव विवेकहीनः । तस्य औचित्यप्रज्ञा एव नास्ति । कृष्णस्य अग्रपूजा करणीया इति यदि पूर्वमेव चिन्तितं स्यात् तर्हि इतरे राजानः किमर्थम् आहूताः ? एतेषाम् अवमाननं करणीयम् इति उद्देशः वा भवतः ? भवान् महाशूरः इति मत्वा भवत्तः भीताः सन्तः वयम् उपायनानि न आनीतवन्तः । धर्मज्ञः, सत्यव्रतः, साम्राज्यानि पालयितुम् अर्हः च इति मत्वा उपायनानि आनीतवन्तः स्मः ।

किन्तु एतेन अकार्येण भवान् अपकीर्तिं प्राप्तवान् अस्ति'' इति उक्त्वा पुनः कृष्णम् उद्दिश्य - ''एते पाण्डवाः भवतः कुतन्त्रात् भीताः सन्तः, भवद्विषयिण्याः प्रीत्याः कारणतः वा अर्घ्यं भवते दत्तवन्तः सन्ति । किन्तु स्वस्य योग्यतां ज्ञात्वा खलु भवता स्वीकरणीयम् ? राजत्वरहितस्य भवतः अग्रपूजास्वीकरणे अधिकारः एव नास्ति । एतेन भवतः एव अवमाननम् अभवत्, न तु सभ्यानाम् । धर्मराजस्य अधर्मबुद्धिं, भीष्मस्य बुद्धिहीनतां, भवतः अविवेकं च ज्ञात्वा अपि एतस्यां सभायाम् उपस्थितिः न उचिता'' इति वदन् कोपेन सपरिवारं ततः गन्तुम् उद्युक्तः अभवत् ।

तदा धर्मराजः शिशुपालस्य गमनं निवारयन् - ''शिशुपाल, तिष्ठतु । भवता एवं न वक्तव्यम् । भीष्मसदृशाः ज्येष्ठाः आदरणीयाः । कृष्णस्य विषये भवत्तः अपि अधिकं जानन्ति ते । भवदपेक्षया ज्येष्ठाः सभायां विनाविरोधं स्थितवन्तः सन्ति । एवं स्थिते भवान् किमर्थम् आक्षिपति ?'' इति शान्तवचनैः तस्य शिशुपालस्य समाधानं कर्तुम् उद्युक्तः ।

तदा भीष्मः धर्मराजम् उद्दिश्य - ''एतस्य दुष्टस्य शिशुपालस्य किमर्थं सान्त्वनं करोति भवान् ? सः निन्दतु नाम । तस्य निन्दनेन का हानिः ?'' इति उक्त्वा सभ्यान् उद्दिश्य - ''एषः शिशुपालः महामूर्खः । कृष्णस्य ज्येष्ठत्वं कीदृशम् इत्येव न जानाति एषः । अतः अस्माभिः कृष्णाय यत् अर्घ्यं दत्तं तत् सः आक्षिपतु नाम । पश्याम'' इति उक्तवान् ।





"कृष्णस्य अग्रपूजायाः विषये यः आक्षेपं करोति तस्य शिरसि मम पादं स्थापयामि । तादृशः कोऽपि अस्ति चेत् अग्रे आगच्छतु नाम" इति वदन् पादम् उन्नीय स्थितवान् सहदेवः ।

सभा स्तब्धा अभवत् । तदा शिशुपालस्य सेनाधिपतिः सुनीधः उत्थाय - "भो भोः राजानः, सर्वे उत्तिष्ठन्तु भवन्तः । यादवाः पाण्डवाः च अस्माकम् अवमाननं कुर्वन्तः सन्ति । सैन्यं सज्जीकुर्वन्तु । वयं सर्वे मिलित्वा एतेषाम् अहङ्कारम् अपगमयाम" इति वदन् स्वपक्षीयान् राज्ञः एकत्रीकृतवान् । युद्धाय शिशुपालेन अपि अनुमतिः दत्ता ।

एतत् दृष्ट्वा भीतः धर्मराजः भीष्मम् उद्दिश्य - "पितामह, राजानः सर्वे युद्धस्य सन्नाहं कुर्वन्तः सन्ति । अस्मिन् सन्दर्भे यागस्य विघ्नः, प्रजानां हानिः च यथा न भवेत् तथा उपायः चिन्तनीयः" इति उक्तवान् ।

तदा भीष्मः - "स्वयं श्रीकृष्णः एव भवतः यागं रक्षन् अस्ति । एवं स्थिते को वा विघ्नम् आचरितुं समर्थः भवेत् ? शिशुपालस्य अन्त्यकालः सन्निहितः अस्ति इति तु निश्चितम् । अतः एव सः इदानीं स्वस्य दुर्बुद्धिं प्रदर्शयन् अस्ति" इति उक्तवान् ।

तदा शिशुपालः कोपोद्रिक्तः सन् भीष्मस्य निन्दनं कृतवान् । कृष्णमपि कटुशब्दैः निन्दितवान् सः । शिशुपालस्य व्यवहारेण कुपितः भीमः वीरावेशं प्राप्य दन्तान् कटकटायमानः शिशुपालं हन्तुम् उद्युक्तः । किन्तु भीष्मः भीमस्य प्रयत्नम् अवरुद्धवान् ।

अनन्तरं सः शिशुपालस्य पृष्ठभूमिकां विवृतवान् -

"जन्मप्राप्तिसमये शिशुपालस्य त्रीणि नेत्राणि, चत्वारः हस्ताः च आसन् । जन्मनः अनन्तरं गर्दभः इव सः ध्वनिं कृतवान् । तत् दृष्ट्वा तदीया माता सात्त्वती, पिता दमघोषः च तं शिशुं कुत्रापि क्षेप्तुम् उद्युक्तौ । तदा अशरीरवाणी श्रुता - "एतस्य परित्यागं न कुर्वन्तु । एषः भविष्यति काले महान् पराक्रमी भविष्यति । इदानीम् एतस्य मरणं न भविष्यति । किन्तु एतस्य हन्ता अन्यत्र

वर्धमानः अस्ति'' इति ।

तदा सात्त्वती पुत्रव्यामोहवशात् - ''कः एतस्य हन्ता ?'' इति पृष्टवती ।

तदा पुनः अशरीरवाणी श्रुता - ''कश्चित् यदा एतम् उन्नयति तदा एतस्य तृतीय नेत्रं, द्वौ हस्तौ च यदि गलन्ति तर्हि सः उन्नेता एव एतस्य हन्ता भविष्यति'' इति ।

तदारभ्य ये ये शिशुं द्रष्टुम् आगच्छन्ति स्म, तान् सर्वान् अपि 'शिशुम् उन्नयतु' इति सानुरोधं वदति स्म सात्त्वती ।

अथ कदाचित् कृष्णबलरामौ चेदिपुरम् आगतवन्तौ । दमघोषेण सह वार्तालापं कृत्वा अन्तःपुरस्थया सात्वत्या मिलितवन्तौ । सा कुशलप्रश्नादिकं पृष्टवती । अनन्तरं यथापूर्वं शिशुं बलरामाय दत्तवती । ततः कृष्णाय शिशुं अपि दत्तवती सा ।

यदा कृष्णः शिशुम् उन्नीतवान् तदा शिशोः तृतीयं नेत्रं, हस्तद्वयं च अदृश्यम् अभवत् । 'कृष्णः एव मम पुत्रं हनिष्यति' इति ज्ञातवती सात्त्वती । दिग्भ्रान्ता सा - ''एतेन करिष्यमाणाः अपराधाः क्षन्तव्याः भवता'' इति प्रार्थितवती ।

तदा कृष्णः - ''एतस्य शतं दोषान् क्षमिष्यामि'' इति अङ्गीकृतवान् ।

भीष्मः एतान् सर्वान् विषयान् विवृत्य मौनम् आश्रितवान् । स्ववृत्तान्तं श्रुत्वा कुपितः शिशुपालः भीष्मस्य निन्दनम् आरब्धवान् । अनन्तरं कृष्णम् उद्दिश्य -



''मया सह योद्धुम् आगच्छतु । भवतः शक्तेः परीक्षा भवतु । यावत् भवतः मरणं न भविष्यति तावत् भीष्मस्य मदापगमनं न भविष्यति । भवतः मारणस्य अनन्तरमेव पाण्डवानां विषये चिन्तयिष्यामि । यतः भवन्तं पूजितवन्तः इति कारणतः एते सर्वे निश्चयेन वधार्हाः एव'' इति कोपेन निन्दन् आसीत् ।

सर्वं श्रुत्वा कृष्णः इतरान् राज्ञः उद्दिश्य - ''सर्वे शृण्वन्तु । एषः शिशुपालः यद्यपि मम पितृभगिन्याः पुत्रः अस्ति, तथापि सर्वदा यादवानां पीडनं बहुधा कृतवान् अस्ति । यदा वयं प्राग्ज्योतिषपुरम् आक्रान्तवन्तः आस्म, तदा एषः द्वारकायाः उपरि आक्रमणं कृत्वा अस्माकं नगरं दग्ध्वा



गतवान् । वयं यदा रैवतकपर्वते विहरन्तः आस्म तदा एषः आगत्य अस्मासु कांश्चन मारयित्वा, स्त्रीणाम् अपहरणं कृतवान् । मम पिता वसुदेवः यदा अश्वमेधयागं कुर्वन् आसीत् तदा एषः यागाश्वम् अपहृतवान् आसीत् । बभ्रुवाहनस्य पत्नीम् अपि अपहृतवान् आसीत् एषः । कदाचित् एषः रुक्मिणीं परिणेतुम् इष्टवान् आसीत् । किन्तु तथा कर्तुं न शक्तवान् । एवम् एतेन कृतानि दुष्कृत्यानि असंख्याकानि । तथापि मातुलान्यै दत्तस्य वचनस्य पालनार्थं सर्वं सोढ्वा तूष्णीं स्थितवान् अस्मि'' इति उक्तवान् ।

तदा शिशुपालः विकटाट्टहासपूर्वकं - ''कृष्ण, याम् अहम् इष्टवान् आसं तां भवान् परिणीतवान् अस्ति । तम् एव विषयं निर्लज्जः भवान् सभायां वदन् अस्ति अपि । धिक् भवन्तम् । भवतः दयया अहं जीवन् नास्मि । भवत्तः सर्वथा न बिभेमि अहम् । भवान् यत् कर्तुम् इच्छति तत् कृत्वा प्रदर्शयतु तावत् । तेन न कापि भीतिः मम'' इति उक्तवान् ।

अनुक्षणं कृष्णः अङ्गुल्या सुदर्शनचक्रं गृहीत्वा शिशुपालम् उद्दिश्य प्रयुक्तवान् । सुदर्शनचक्रेण शिशुपालस्य शिरश्छेदनं कृतम् । तस्य शरीरं भूमौ पतितम् । तस्य शरीरात् तेजः निर्गत्य कृष्णे लीनम् अभवत् । एतत् दृष्ट्वा सभासदः सर्वे आश्चर्यचकिताः अभवन् । एवं तस्य दुष्टस्य नाशः अभवत् ।

धर्मराजः, शिशुपालस्य शरीरस्य अन्त्यसंस्कारं निर्वर्तयितुं भटान् आदिष्टवान् । शिशुपालस्य पुत्रं चेदिदेशस्य राजत्वेन घोषयित्वा तस्य पट्टाभिषेकं निर्वर्तितवान् सः ।

राजसूययागः सुष्ठु सम्पन्नः । धर्मराजः अवभृतस्नानं कृत्वा दीक्षां विसृष्टवान् । सर्वेऽपि राजानः आगत्य सम्राजं धर्मराजम् अभिनन्दितवन्तः, प्रतिगमनाय अनुज्ञां प्रार्थितवन्तः च ।

धर्मराजः यथोचितं तान् सत्कृत्य हस्तिनापुरस्य सीमान्तं यावत् प्रेषणार्थम् अनुजान् नियोजितवान् । कृष्णः अपि यागं समाप्य द्वारकां प्रतिगतवान् । मयसभा द्रष्टव्या इति दुर्योधनः शकुनिना सह तत्रैव

स्थितवान् ।

कदाचित् धर्मराजस्य सभां प्रति व्यासमहर्षिः आगतवान् । तदा धर्मराजः स्वस्य मनसि उदितं कञ्चन प्रश्नं पृष्टवान् - "राजसूययागसमये शिशुपालस्य वधः अभवत् । किम् एतत् अपशकुनं न ?" इति ।

तदा व्यासः उक्तवान् - "आम् । एतत् अपशकुनमेव । एतस्य फलं त्रयोदश-वर्षानन्तरं ज्ञातं भविष्यति । तदा क्षत्रियाणां विनाशः भवेत् । विविधनिर्णयं को वा परिवर्तयितुम् अर्हति ?" इति ।

व्यासस्य वचनं श्रुत्वा धर्मराजः चिन्ताक्रान्तः अभवत् । अर्जुनभीमादयः सर्वेऽपि तं धैर्यवचनानि उक्तवन्तः ।

मयसभां पश्यन् दुर्योधनः अवमानं प्राप्तवान् । यत्र जलं न आसीत् तत्र जलभ्रान्तिं प्राप्तवान् सः । यत्र जलम् आसीत् तत्र भूमिभ्रान्तिं प्राप्य सः दृढं पदं स्थापितवान् । एतत् दृष्ट्वा भीमार्जुन-नकुल-सहदेवादयः, द्रौपदी, तस्याः सेवकाः च हसितवन्तः । 'दुर्योधनः खेदं न अनुभवेत्' इति उद्देशेन धर्मराजः उत्तमैः वस्त्रैः तं तोषितवान् ।

किन्तु इतोऽपि बहुषु स्थानेषु दुर्योधनस्य अपमाननम् अभवत् । द्वारम् अस्ति इति मत्वा सः यत्र अग्रे गतवान् तत्र ललाटः भित्त्या घट्टितः अभवत् । यत्र समतलभूमिः आसीत् तत्र भूमौ औन्नत्यभ्रमं प्राप्य पदम् उपरि स्थापयन् सः पतितवान् । एवं, मयसभायाः दर्शनस्य आकाङ्क्षया आगतस्य तस्य महत् अवमाननम् अभवत् । असूयया दुर्योधनः पीड्यमानः आसीत् । 'धर्मराजः साम्राज्यम् अलभत । लोकोत्तरां मयसभाम् अपि सम्पादितवान् अस्ति सः । मत्तः श्रेष्ठतां प्राप्तवान् अस्ति सः' इत्येतत्सर्वं स्मरतः दुर्योधनस्य मनसि असूया ज्वलति स्म । असूयातापतः तस्य हृदयतापः दिने दिने वर्धते स्म । एवम् असूयया दह्यमानः एव दुर्योधनः धर्मराजस्य अनुज्ञां प्राप्य सहोदरादिभिः परिवारजनैः च सह हस्तिनापुरं प्रति गतवान् ।



# 'सेहोरा'नामकाः वृक्षाः

परमेश्वरः नन्दिवाहनम् आरुह्य प्रयाणं कुर्वन् आसीत् । मध्येमार्गं वैतरणीनदीं दृष्ट्वा सः वाहनात् अवतीर्य नद्यां स्नानं कर्तुम् उद्युक्तः अभवत् । तटे एव स्थितः नन्दी समीपस्थम् एकं वृक्षं दृष्ट्वा, तस्य पर्णानि स्पृष्टवान् । एतत् दृष्ट्वा परमेश्वरः तं पृष्टवान् - "किमर्थं भवान् तथा कृतवान् ?" इति ।

"एषः 'सेहोरा'नामकः वृक्षः खलु ? एतस्य वृक्षस्य पर्णानां स्पर्शः जातः चेत् भक्ष्यभोज्यादिकं प्राप्येत इति पुराणानि कथयन्ति । अतः अहं तानि स्पृष्टवान्" इति उक्तवान् नन्दी ।

"अहो, अन्धविश्वासः भवतः ! अद्य भवान् भक्ष्यादिकं कथमपि यथा न प्राप्नुयात् तथा करिष्यामि" इति उक्त्वा नन्दिनम् आरुह्य सर्वत्र अटनम् आरब्धवान् परमेश्वरः । मार्गे नन्दिना कुत्रापि आहारः न लब्धः ।

कैलासे पार्वती ईश्वरस्य प्रतीक्षां कुर्वती आसीत् । दीर्घप्रतीक्षानन्तरम् अपि यदा ईश्वरः न आगतः तदा सा भोजनस्य आरम्भं कृतवती । तावता तया नन्दिनः आगमनशब्दः श्रुतः । "अहो, आर्यपुत्रः आगतः इति भाति । पत्युः भोजनात् पूर्वं पत्न्याः मम भोजनं शास्त्रविरुद्धं स्यात्" इति चिन्तयित्वा पाकपात्राणि नन्दिनः वासस्थले झटिति स्थापयित्वा पतिं स्वागतीकृतवती सा ।

शिवस्य मुखे कोपः स्फुटं दृश्यते स्म । शिवः यानात् अवतीर्य - "एतस्मै अद्य भोजनदानं मास्तु" इति पत्नीम् आदिष्टवान् ।

शिवस्य कोपस्य कारणं किम् इति न ज्ञातं नन्दिना । शिवस्य कोपस्य कारणं चिन्तयन् एव सः शयनं कर्तुम् उद्युक्तः । तावता तेन पाकस्य सुगन्धः आघ्रातः । आश्चर्यचकितः सः सर्वत्र दृष्टिं प्रसारितवान् । उत्तमं भोजनं पार्श्वे एव आसीत् । महता सन्तोषेण भोजनं कृतवान् नन्दी ।

पुराणवाक्यं वितथं न भवति इत्येतत् निरूपयितुम्

एषा सेहोरानामकस्य वृक्षस्य कथा उच्यते । एषः वृक्षः वृक्षशास्त्रे 'स्ट्रेब्लस् यास्पर्' इति निर्दिश्यते । आंग्लभाषया 'सियास्बुस्' इति, हिन्दी-भाषया बङ्गालीभाषया च 'सेहोरा' इति, मराठीभाषया 'खरेटी' इति, मलयाळभाषया 'परूका' इति, तमिळुभाषया 'पिरियामरम्' इति च उच्यते एषः वृक्षः । एतस्य वृक्षस्य पर्णानि अण्डाकारकाणि भवन्ति । पर्णानाम् अग्रभागः द्विधा विभक्तः दृश्यते । एतज्जातीयवृक्षाणां पर्णानां पार्श्वद्वयम् अपि रूक्षं भवति इत्यतः दन्तशिल्पादीनां समीकरणे उपयुज्यन्ते एतानि । एतस्य वृक्षस्य पुष्पाणि लघूनि हरितवर्णीयानि च भवन्ति । जनवरी-मार्च्मासयोः अभ्यन्तरे एते वृक्षाः पल्लविताः पुष्पिताः च भवन्ति । एतस्य वृक्षस्य त्वक् तनुः दृढा धूसरवर्णीया च भवति । बहवः औषधीयगुणाः भवन्ति एतस्याम् ।



# उदङ्कः

महाभारतादिषु प्राचीनग्रन्थेषु प्रस्तुतेषु महर्षिषु अन्यतमः अस्ति उदङ्कमहर्षिः ।

उदङ्कः पैलमुनेः शिष्यः । विद्याभ्यासस्य अनन्तरं सः गुरुम् उद्दिश्य - "गुरुवर्य ! भवतः विद्यां प्राप्नुवन् अहम् अधमर्णः अस्मि । इतः मोक्षं प्राप्तुं मया किमपि करणीयम् एव । तदर्थं पृच्छामि - भवतः किं प्रियं करणीयं मया ?" इति पृष्टवान् ।

तदा गुरुः उक्तवान् - "न काऽपि इच्छा मम । वत्स ! भवान् एतद्विषये मम पत्नीं पृच्छतु" इति । उदङ्कः गुरुपत्नीसमीपं गत्वा सर्वं निवेदितवान् । तदा सा उक्तवती - "पौष्यराजस्य पत्न्या ध्रियमाणम् अपूर्वं कुण्डलं धर्तव्यम् इति मम इच्छा" इति ।

उदङ्कः पौष्यराजसमीपं गत्वा गुरुपत्न्याः अपेक्षां निवेदितवान् । तदा राजा उक्तवान् - "राज्ञी अन्तःपुरे अस्ति । भवान् तत्र गत्वा तां कुण्डलं याचतु" इति ।

उदङ्कः अन्तःपुरं गतवान् । किन्तु तेन तत्र महाराज्ञी न दृष्टा । ततः प्रत्यागत्य उदङ्कः महाराजं प्रवृत्तं समग्रं निवेदितवान् । क्षणकालस्य मौनस्य अनन्तरं महाराजः पृष्टवान् - "भवान् अद्य उदयकाले स्नात्वा शुचिर्भूय, आहारं भगवते समर्प्य, पूजां निर्वर्त्य भोजनं कृतवान् वा ?" इति ।

"न" इति उक्तवान् उदङ्कः ।

"श्वः तथा कृत्वा अन्तःपुरं गत्वा



पश्यतु । राज्ञी दृष्टिगोचरा भविष्यति'' इति उक्तवान् राजा ।

उदङ्कः अनन्तरदिने राज्ञः सूचनानुगुणम् एव व्यवहृत्य राज्याः अन्तःपुरं गतवान् । तदा राज्ञी दृष्टिगोचरा जाता । उदङ्कस्य विनयं विधेयतां च दृष्ट्वा सन्तुष्टा सा उदङ्कस्य प्रार्थनां पुरस्कृत्य कुण्डलं दत्तवती ।

कुण्डलं स्वीकृत्य गुरोः आश्रमं प्रति प्रस्थितः उदङ्कः मध्येमार्गम् एकं तटाकं दृष्टवान् । तटाके स्नानं कर्तुम् इच्छन् सः कस्याश्चित् शिलायाः उपरि कुण्डलं संस्थाप्य जले पादं स्थापितवान् ।

यावत् सः स्नानं समाप्य प्रत्यागतः तावता कुण्डलं स्वीकृत्य पलायमानः कश्चन संन्यासी तेन दृष्टः । तम् अनुसृत्य धावितवान् उदङ्कः । सः संन्यासी तेन दृष्टः । तम् अनुसृत्य धावितवान् उदङ्कः । सः संन्यासी समीपस्थां काञ्चित् गुहां प्रविष्टवान्, सर्परूपं प्राप्य कञ्चित् वल्मीकं प्रविशन् अदृश्यतां गतः च ।

उदङ्कः इन्द्रं प्रार्थितवान् । अपरक्षणे इन्द्रस्य वज्रायुधं गुहायाः छेदनम् अकरोत् । तत्र पाताललोकं प्रति गन्तुं मार्गः प्राप्तः । उदङ्कः तेन मार्गेण गत्वा पाताललोकं प्राप्तवान् । सर्पराजस्य स्तुतिं कृत्वा तं तोषयित्वा ततः कुण्डलं प्रतिप्राप्तवान् ।

उदङ्कः पाताललोके श्वेत-हरित-तन्तुभिः वस्त्रनिर्माणे मग्ने उभे महिले दृष्टवान् । वस्त्रनिर्माणयन्त्रस्य द्वादश अराः आसन् । तत् चक्रं षट् बालकाः चालयन्तः आसन् ।

उदङ्कः आश्रमं गत्वा गुरुपत्न्यै कुण्डलम्



अर्पितवान् । पाताललोके आत्मना दृष्टं सर्वं गुरुं निवेदितवान् च । तदा गुरुः उक्तवान् - ''हरितश्वेततन्तवः रात्रिं दिनं च सङ्केतयन्ति । चक्रं कालं सङ्केतयति । चक्रस्य द्वादश अराः द्वादश मासान् सूचयन्ति । चालकाः षट् बालकाः एव ऋतवः'' इति ।

उदङ्ककथायां कानिचन निगूढतत्त्वानि निहितानि सन्ति । पातालस्य प्रवेशः, सृष्टिरहस्यशोधनार्थं कृतः अपूर्वः यत्नः, कुण्डलं च सुप्तज्ञानस्य सङ्केताः । 'अचलः आत्मविश्वासः, निरन्तरप्रयत्नः, जिज्ञासा च अस्ति चेदेव दिव्यज्ञानं प्राप्तुं शक्यते' इत्येतत् तत्त्वम् एव बोधयति उदङ्ककथा इति प्राज्ञाः वदन्ति ।

# भवन्तः जानन्ति वा ?

१. चतुरङ्गक्रीडाफलके कति चतुरस्राणि भवन्ति ?
२. प्रपञ्चस्थेषु महाकाव्येषु अतिमहत् काव्यं किम् ?
३. कस्मिन् देशे आधिक्येन भूकम्पाः सम्भवन्ति ?
४. प्राचीने काले सन्देशप्रेषणार्थं कस्य पक्षिणः उपयोगः क्रियते स्म ?
५. शिलाभक्षकपक्षिणः नाम किम् ?
६. सौरमण्डले स्थितः अतिमहान् ग्रहः कः ?
७. कस्मिन् देशे नैल्नदी वरत्वेन परिगण्यते ?
८. वृष्टिः कथं सम्भवति ?
९. जैनमतस्थापकः कः ?
१०. मानवस्य हृदयस्य परिमाणं किम् ?
११. ज्वरमापके साधने कस्य द्रवलोहस्य उपयोगः क्रियते ?
१२. अमेरिकादेशस्य सर्वप्रथमः अध्यक्षः कः आसीत् ?
१३. त्रयाणां महासमुद्राणां नामानि कानि ?
१४. अनुवैद्यवृत्तेः कारणभूतायाः महिलायाः नाम किम् ?
१५. सूर्यरश्मितः प्राप्यमाणस्य जीवसत्त्वस्य नाम किम् ?
१६. अस्माकं देशे किंवर्षीयः मतदानार्हतां प्राप्नोति ?
१७. १९९६ तम वर्षं लीप्वर्षम् । एतादृशं लीप्वर्षं कतिषु वर्षेषु एकवारं प्राप्यते ?
१८. वृषभयुद्धार्थं प्रसिद्धौ देशौ कौ ?

## उत्तराणि

१. ६४ । तेषु ३२ श्वेतवर्णीयानि, ३२ कृष्णवर्णीयानि च ।
२. महाभारतम् ।
३. जपान्देशे ।
४. कपोतस्य ।
५. आस्ट्रिच् इति ।
६. गुरुग्रहः ।
७. ईजिप्ट्देशे ।
८. मेघस्थान् जलबिन्दून् यदा वायुः वोढुं न शक्नोति तदा ।
९. वर्धमानमहावीरः ।
१०. मुष्टिपरिमितत्वम् ।
११. पारदस्य ।
१२. जार्ज् वाशिङ्गटन् ।
१३. पेसिफिक्, अट्लाण्टिक्, हिन्दुमहासागरश्चेति ।
१४. फ्लारेन्स् नैटिङ्गेल् इति ।
१५. 'डि' जीवसत्त्वम् ।
१६. १८ वर्षीयः ।
१७. चतुर्षु वर्षेषु एकवारम् ।
१८. स्पेयिन्, मेक्सिको च ।



# शिल्पसुन्दरी

पूर्वं धर्मपुरी नाम काचित् नगरी आसीत् । तां नगरीं मानसवीरः नाम कश्चन महाराजः पालयति स्म । सः कलोपासकः विष्णुभक्तः चापि आसीत् । कदाचित् सः निश्चितवान् यत् राजधान्याम् अत्यन्तसुन्दरस्य विष्णुदेवालयस्य निर्माणं करणीयम् इति । जकणाचार्यः नाम कश्चन युवशिल्पी तेन एतस्मिन् कार्ये नियुक्तः । जकणाचार्यः देवालयस्य पार्श्वे एव स्वस्य पित्रा सह वासम् आरब्धवान् ।

एकस्मिन् दिने प्रातः जकणाचार्यः विग्रहाणां निर्माणार्थं उपयोक्तुम् अर्हाणां पाषाणानाम् अन्वेषणार्थं राजधान्याः बहिः कश्चन पर्वतं प्रति गतवान् । आत्मना सह षड् कर्मकरान्, पाषाणानि आनेतुम् एकं शकटं चापि नीतवान् सः ।

पर्वतः दूरे आसीत् । अतः पर्वत-प्राप्तिसमये मध्याह्नः जातः आसीत् । आगमनस्य उद्देशं स्मरन्तः सर्वे कर्मकराः योग्यशिलानाम् अन्वेषणम् आरब्धवन्तः । किन्तु उत्तमविग्रहनिर्माणार्थम् आवश्यिकाः श्रेष्ठतमाः शिलाः न लब्धाः एव । कुत्रचित् श्रेष्ठाः शिलाः दृष्टाः । किन्तु तासाम् आकारः अपेक्षितपरिमाणेन न भवति स्म । यस्याः शिलायाः परिमाणं सम्यक् दृश्यते स्म तस्यां काश्चित् न्यूनताः दृष्टिगोचराः भवन्ति स्म । एतेन कारणेन जकणाचार्यः निरुत्साहितः जातः । एतावता सूर्यः आकाशस्य मध्यभागं गतः आसीत् । अतीवबुभुक्षितः जकणः कर्मकरैः सह सरोवरस्य तटे उपविश्य भोजनं समापितवान् ।

पुनः शिलानाम् अन्वेषणकार्यम् आरब्धम् । सूर्यः अस्तं गच्छन् आसीत् । तावता अपि योग्याः शिलाः न लब्धाः एव । जकणस्य मनसि चिन्ता आरब्धा ।



राजधानीप्राप्तिसमये रात्रिः जाता आसीत् । अर्धरात्रम् अतीतं चेत् अपि जकणस्य निद्रा एव न आगता आसीत् । शयानः सः इतस्ततः लुण्ठनं कुर्वन् आसीत् । अन्ते किञ्चित् इव तन्द्रा तेन प्राप्ता । तस्मिन् समये काचित् गन्धर्वकन्या तस्य स्वप्ने प्रत्यक्षीभूय उक्तवती - ''जकण, अहं काचित् गन्धर्वकन्या । शापकारणात् शिलारूपं प्राप्तवती अस्मि । अतः कृपया भवान् स्वस्य अमृतहस्तेन शिलायां मम मूर्तरूपं कल्पयित्वा तस्यां जीवकान्तिं पूरयतु । यदि मम पुण्यबलं स्यात् तर्हि अहं सजीवा भवेयम्'' इति । तावता जकणस्य निद्राभङ्गः जातः । तदीयः स्वप्नः भग्नः ।

'एतावद्दूरम् आगत्य रिक्तहस्ततया गमनम् अनुचितम्' इति जकणस्य मनः वदति स्म । अन्ते सः निर्णीतवान् च अद्य योग्यशिलाः प्राप्य एव गमनम् इति ।

अन्वेषणं तीव्ररूपेण प्रचलत् आसीत् । तस्मिन् समये किञ्चिद्दूरे कस्यचन वटवृक्षस्य अधः काचित् सुवर्णशिला दृष्टा । तस्याः कान्तिः सर्वत्र प्रसृता आसीत् । नितरां सन्तुष्टः जकणः शिलायाः सुवर्णकान्तिं दृष्ट्वा आश्चर्यचकितः जातः । यतः एतादृश्याः अपूर्वायाः शिलायाः प्राप्तिः, तत्रापि विरलाकारिकायाः प्राप्तिः, असम्भवा एव आसीत् । प्रायः एषः भगवतः कृपा इति चिन्तयित्वा जकणः तां शिलां शकटे स्थापितवान् ।

तादृशस्य स्वप्नस्य कारणात् जकणः आश्चर्यचकितः जातः । पर्वते यदा शिला दृष्टा तदा एव तस्य मनसि संशयः उत्पन्नः आसीत् - शिलायां वैशिष्ट्यं किमपि अस्ति इति । ततः पुनः स्वप्नदर्शनम् ! आश्चर्यम् अनुभवन् जकणः प्रातः उत्थाय स्वप्नवार्तां पितरं निवेदितवान् । सर्वं श्रुत्वा जकणस्य पिता उक्तवान् - ''जकण, भवता आनीता शिला नितराम् अपूर्वा अस्ति । भवतः स्वप्नः अवितथः न इति मम अन्तरङ्गं वदति । अतः महाराजाय प्रवृत्तस्य सर्वस्य निवेदनम् उचितम् इति भाति'' इति ।

पितुः वचनानुसारं जकणः अनुक्षणं महाराजस्य प्रासादं गत्वा प्रवृत्तं सर्वं विवृतवान् । महाराजः किञ्चित्कालं यावत्

मनसि एव आलोच्य अन्ते आस्थानस्य दैवज्ञम् आह्वातुं दूतं प्रेषितवान् । दैवज्ञस्य आगमनानुक्षणं सर्वे महाराजस्य रहस्य-मन्दिरे मिलित्वा जकणेन प्राप्तायाः शिलायाः विषयं, गन्धर्वस्त्रिया स्वप्ने आगत्य उक्तं सर्वं च निवेद्य - ''अग्रिममार्गं दर्शयतु कृपया'' इति प्रार्थितवन्तः ।

दैवज्ञः किञ्चित्कालं यावत् ध्यानपूर्वकं नेत्रे निमील्य देवं स्मृतवान् । किञ्चिदनन्तरं नेत्रे उद्घाट्य - ''महाराज, जकणेन दृष्टः स्वप्नः न मिथ्या । गन्धर्वकन्या एव शिलारूपं प्राप्तवती अस्ति । पूर्वं राक्षसानां शिल्पी मयनामकः कश्चन आसीत् । तस्य शिष्येषु अन्यतमः पराङ्कुशः मनोरमा-नामिकाम् एकां गन्धर्वकन्यां कदाचित् दृष्टवान् । तस्याः सौन्दर्यं दृष्ट्वा सः झटिति आकृष्टः अभवत् । सः निर्णीतवान् यत् एतस्याः शिल्पं निर्मातव्यम् इति । सः स्वस्य अपेक्षां मनोरमां निवेदितवान् । मनोरमा एतं प्रस्तावम् अङ्गीकृतवती । तस्य पुरतः हावभावसहितं स्थितवती च । ततः पराङ्कुशः शिल्पं निर्मितवान् । किन्तु 'एतत् मद्रूपानुगुणं नास्ति' इति वदन्ती पराङ्कुशस्य उपहासं कृतवती मनोरमा । तदा कुपितः पराङ्कुशः तां सुवर्णशिलां कृत्वा भूमिं प्रति क्षिप्तवान् । सा शिला अस्माभिः प्राप्ता अस्ति । विष्णोः विग्रहस्य निर्माणार्थम् एतस्याः शिलायाः उपयोगः अपचाराय भवेत् इति मम अभिप्रायः । यतः गन्धर्वस्त्रियाः आत्मा तस्यां मूर्तौ भवति एव । अतः एव सा जकणस्य स्वप्ने आगत्य स्वस्य आशां निवेदितवती । एतस्याः मूर्तेः





अन्यः विशेषः नाम तां शिलाम् उपयुज्य यस्य शिल्पं क्रियते तत् शिल्पं यावत् स्थास्यति तावत् सा व्यक्तिः युवावस्थायाम् एव स्थास्यति'' इति उक्तवान् ।

दैवज्ञस्य वचनं श्रुत्वा महाराजः मानसवीरः नितरां सन्तुष्टः । तस्य मुखस्य कान्तिः एव वदति स्म यत् मनसि एव कश्चन उपायः तेन चिन्तितः इति । रहस्यमन्दिरात् बहिरागमनस्य अनुक्षणं महाराजः जकणम् एकान्ते आहूय - ''जकण, भवता तां सुवर्णशिलाम् उपयुज्य मम मूर्तिः एव करणीया । एतत् कार्यं दशदिनाभ्यन्तरे समाप्तं भवेत्'' इति आज्ञापितवान् ।

जकणः महाराजेन उक्तं मौनं श्रुत्वा केवलं शिरः सञ्चाल्य गृहं प्रति आगतवान् । महाराजस्य इच्छां पितरं निवेदितवान् च । वृद्धपिता किञ्चित् आलोच्य - ''जकण, भवतः मनः यथा वदति तथा करोतु । भीतिः मास्तु'' इति सूचितवान् ।

पुनः अपि तस्मिन् दिने रात्रौ गन्धर्वस्त्री तस्य स्वप्ने आगत्य उक्तवती - ''महाराजस्य इच्छा स्वार्थयुक्ता । सा शिला मम इति कारणतः भवता मम आकारस्य शिल्पम् एकं निर्मातव्यम् । एषः न्यायसम्मतः व्यवहारः'' इति । अन्ते जकणः निर्णीतवान् यत् गन्धर्वस्त्रियाः एव आकारस्य शिल्पं निर्मातव्यम् इति ।

अनन्तरदिने जकणः सुवर्णशिलायाः पुरतः उपविश्य तां गन्धर्वस्त्रियं स्वस्य स्मृतिपथे आकलयन् तस्याः रूपम् ऊहितवान् । अनन्तरं एकाग्रचित्ततया शिल्पस्य निर्माणम् आरब्धवान् च । मूर्तिशिल्पनिर्माणसमये जकणः मध्ये मध्ये उद्वेगम् अनुभवति स्म । न केवलं तावत्, शिल्पस्य मुखे मन्दहासम् आनेतुम् एव न शक्तवान् सः । महतः प्रयत्नस्य अनन्तरम् अपि शिल्पस्य मुखे दृश्यमानां विषादच्छायाम् अपनेतुं सर्वथा न शक्तवान् सः ।

दशमे दिने गन्धर्वस्त्रियाः शिल्पं निर्मित्तं जकणेन । आपादमस्तकं पुनरेकवारं परीक्ष्यादृष्ट्या दृष्ट्वा - ''स्वप्ने दृष्टायाः गन्धर्वस्त्रियाः प्रतिरूपम् एव एतत्'' इति तृप्तिं प्राप्तवान् सः ।

तस्मिन् दिने सायङ्काले महाराजः

जकणेन निर्मितं शिल्पं द्रष्टुं महाराज्ञ्या सह आगतवान् । मण्डपात् बहिः स्थितं स्त्रीशिल्पं दृष्ट्वा महाराजः दिग्भ्रान्तः सन् - "जकण, का एषा शिल्पसुन्दरी ? भवान् असामान्यः शिल्पी । परब्रह्म एव भवान्" इति श्लाघितवान् ।

किञ्चिदनन्तरं स्वस्य शिल्पस्य विषयं स्मृतवान् सः जकणं पृष्टवान् - "मम आकारस्य विग्रहः कुत्र अस्ति ?" इति ।

नितरां खिन्नः जकणः स्वस्य शिरः अवनमय्य - "महाराज, अहं क्षमां प्रार्थये । भवतः आज्ञां पालयितुम् अहम् अशक्तः अभवम् । अनिवार्यकारणेन एतया शिलया गन्धर्वस्त्रियाः आकारस्य एव शिल्पं निर्मितं मया । क्षणात् पूर्वं भवता श्लाघितं शिल्पं तु गन्धर्वस्त्रियाः एव" इति ।

जकणस्य वचनं श्रुत्वा महाराजः नितरां क्रुद्धः जातः । कोपाविष्टः सः उच्च-ध्वनिना - "मम शिल्पस्य निर्माणं करोतु इति मया भवान् सूचितः आसीत्, न तु गन्धर्वस्त्रियाः शिल्पं निर्मातु इति । राजाज्ञां यः धिक्करोति तेन कीदृशं दण्डनं प्राप्यते इति जानाति खलु भवान् ?" इति पृष्टवान् महाराजः ।

जकणः शिरः अवनमय्य एव स्थितवान् आसीत् । तस्मिन् समये आकाशे महत् मेघगर्जनं श्रुतम् । आकाशे सर्वत्र कालमेघाः दृष्टिगोचराः जाताः । ततः क्षणाभ्यन्तरे धाराकारेण वृष्टिः आरब्धा । अकालवृष्टिं दृष्ट्वा राजा, राज्ञी, जकणः च आश्चर्यचकिताः ।

कश्चित् विद्युत्तरङ्गः 'चट् चटिल्' इति शब्दं कुर्वन् आकाशात् गन्धर्वस्त्रियाः उपरि पतितः । तेन गन्धर्वस्त्रियाः विग्रहः छिन्न-विच्छिन्नः जातः । दैवज्ञेन उक्तं वचनं भीतस्य महाराजस्य स्मृतिपथम् आगतम् । 'यदि जकणः मम शिल्पं निर्मितवान् स्यात् तर्हि अहं गतप्राणः अभविष्यम्' इति चिन्तयन् महाराजः भीतः । 'जकणस्य निर्णयात् एव अहं रक्षितः अभवम्' इति चिन्तयन् नितराम् आनन्दितः सः जकणस्य निर्णयम् अभिनन्दितवान् ।





# कनिष्ठः भ्राता

कस्मिंश्चित् ग्रामे कश्चन कृषिकः आसीत् । अनारोग्यकारणतः कदाचित् सः तदीया पत्नी च दिवङ्गतौ । तयोः त्रयः पुत्राः आसन् । पितुः सम्पदः विभागं कर्तुम् इच्छन् तदीयः ज्येष्ठपुत्रः सोमदेवः - "एतत् गृहम् अहं स्वीकरोमि" इति उक्तवान् । तदा द्वितीयः पुत्रः चन्द्रदेवः - "एवं तर्हि केदारम् अहं स्वीकरोमि" इति उक्तवान् । तदा तृतीयः पुत्रः जयदेवः - "मम भागः कुत्र ?" इति अग्रजौ पृष्टवान् ।

गृहे यदा अन्विष्टं तदा कपाटिकायाः उपरि वलयाकारेण बद्धा रज्जुः दृष्टा । "एतां रज्जुं नीत्वा सुखेन जीवतु भवान्" इति अनुजम् उक्तवान् सोमदेवः ।

जयदेवः उत्साही युवकः आसीत् । सः आनन्देन रज्जुं स्कन्धे आरोप्य - "भवतु, तथैव जीवामि" इति वदन् ततः प्रस्थितवान् ।

ग्रामसीमाम् अतिक्रम्य अरण्यमार्गेण गमनसमये अनेके अरण्यमृगाः तेन दृष्टाः । तान् दृष्ट्वा सः स्वसमीपे विद्यमानया रज्ज्वा जालं ग्रथितवान् । जालस्य साहाय्येन कञ्चित् शशं, काञ्चित् गोधां च गृहीतवान् । द्वयमपि स्वीकृत्य कस्यचित् सरोवरस्य समीपम् आगतवान् ।

तत्र सः गुल्मसमीपे गच्छन्तं कञ्चित् भल्लूकं दृष्टवान् । इतोऽपि केचन प्राणिनः ग्रहीतव्याः इति विचिन्त्य कस्यचित् वृक्षस्य छायायाम् उपविश्य जालनिर्माणे मग्नः अभवत् सः ।

तस्मिन् सरोवरे कश्चन जलराक्षसः आसीत् । जलात् बहिः शिरः आनीय सः तीरे उपविष्टं जयदेवं दृष्टवान् । किन्तु जयदेवः किं कुर्वन् अस्ति इति तु न ज्ञातवान् सः । अतः सः अन्तः गत्वा

"पञ्चविंशतिवर्षेभ्यः पूर्वं चन्दमामायां प्रकाशिता कथा"

स्वपुत्रम् आहूय - ''सरोवरतीरे कश्चित् युवकः किमपि कुर्वन् अस्ति । किन्तु तेन क्रियमाणं कार्यं किम् इति स्पष्टं न ज्ञायते । भवान् गत्वा तस्य कार्यम् अवलोक्य आगच्छतु'' इति उक्तवान् ।

जलराक्षसस्य पुत्रः सरोवरात् बहिः आगत्य जयदेवस्य पुरतः स्थित्वा - ''अत्र उपविश्य किं कुर्वन् अस्ति भवान् ? '' इति पृष्टवान् ।

पुरतः स्थितः जलराक्षसः इति अवगतवान् जयदेवः । जलराक्षसानां विषये सः पूर्वं श्रुतवान् आसीत् । जलराक्षसानां बुद्धिः न्यूना । किन्तु यः कोऽपि यदि तस्य दासः भवति तर्हि दास्यतः तस्य विमोचनं कदापि न भवति स्म । एतत् पूर्वमेव जयदेवेन ज्ञातम् आसीत् इत्यतः निर्भयेन सः राक्षसकुमारम् उद्दिश्य - ''किं भोः, न दृश्यते वा - 'जालग्रथनं कुर्वन् अस्मि' इति ? एतेन जालेन सरोवरं बध्नामि । तदा भवद्भिः सर्वैः अन्यत्र गन्तव्यं भवेत्'' इति उक्तवान् ।

जलराक्षसपुत्रः अनुक्षणं सरोवरं प्रविश्य पितरम् उद्दिश्य - ''सः युवकः जाल-प्रसारणं कृत्वा सरोवरं बन्धुम् इच्छति । अतः अस्माभिः अन्यत् स्थलम् अन्वेष्टव्यं भवेत्'' इति उक्तवान् ।

तदा राक्षसः - ''कष्टम् आपतितं खलु । भवान् पुनः गत्वा तेन युवकेन सह वृक्षारोहणस्पर्धाम् आयोजयतु । तं पराजित्य सरोवरे पातयतु च'' इति उक्तवान् ।



ततः जलराक्षसस्य पुत्रः जयदेवस्य समीपम् आगत्य - ''मया सह वृक्षरोहण-स्पर्धायां भागं वोढुम् आगच्छति वा भवान् ?'' इति पृष्टवान् ।

तदा जयदेवः - ''कार्यं कुर्वन् अस्मि इत्येतत् न दृश्यते वा भवता ? मम एषः अनुजः भवता सह स्पर्धते'' इति वदन् कूटयन्त्रे विद्यमानां गोधां बहिः प्रेषितवान् । जलराक्षसपुत्रे पश्यति सा गोधा वृक्षम् आरुह्य उपविष्टवती । तदा जलराक्षसपुत्रः सरोवरं गत्वा स्वस्य पराजयं विवृतवान् । क्षणं यावत् आलोच्य जलराक्षसः पुत्रम् उद्दिश्य - ''भवतु नाम, इदानीं गत्वा धावनस्पर्धार्थं तम् आह्वयतु । तत्र वा भवान् तस्य युवकस्य पराजयं साधयतु'' इति



उक्तवान् ।

पुनरपि जलात् उपरि आगतः जलराक्षसपुत्रः - "भवान् मया सह धावितुं शक्नोति वा ?" इति जयदेवं पृष्टवान् ।

पुनश्च जयदेवः - "किं भोः, मम कार्याणि न सन्ति इति चिन्तयति वा भवान् ? यदि भवता अङ्गीक्रियते तर्हि मम अनुजं प्रेषयिष्यामि" इति उक्त्वा शशं कूटयन्त्रात् बहिः प्रेषितवान् । क्षणाभ्यन्तरे शशः ततः धावित्वा अदृश्यः अभवत् । पुनश्च जलराक्षसपुत्रस्य पराजयः जातः आसीत् । प्रवृत्तं सर्वं पितरं निवेदितवान् सः ।

तदा जलराक्षसः - "एषः अस्माकं यमदूतः इव अस्ति । किन्तु सः शक्त्या भवदपेक्षया दुर्बलः एव । अस्मिन् सन्दर्भे मल्लयुद्धार्थं तम् आह्वयतु । अस्मिन् वा तं पराजित्य जले पातयतु भवान्" इति उक्तवान् ।

तदा तस्य पुत्रः पुनः जयदेवसमीपम् आगत्य - "मया सह मल्लयुद्धार्थम् आगच्छतु" इति उक्तवान् ।

तदा जयदेवः - "भवता सह क्रीडितुं न इच्छामि । मम वृद्धः पितामहः तस्मिन् गुल्मे निद्रितवान् अस्ति । तेन सह स्पर्धताम्" इति वदन्, भल्लूकः यत्र आसीत् तत् स्थलं प्रदर्शितवान् ।

जलराक्षसपुत्रः गुल्मसमीपं गत्वा भल्लूकेन सह मल्लयुद्धं कृत्वा तस्मात् कथञ्चित् विमोचनं प्राप्य पलायनं कृतवान् । पुत्रस्य पराजयं ज्ञात्वा भीतः जलराक्षसः - "एतेन युवकेन सह सन्धिप्रस्तावः एव वरम् । सः सरोवरस्य बन्धनं यथा न कुर्यात् तथा करणीयम् । तदर्थं सः कियत् धनम् इच्छति इति तं पृष्ट्वा आगच्छतु" इति उक्त्वा पुत्रं प्रेषितवान् ।

पुनश्च स्वस्य पुरतः स्थितं जलराक्षसपुत्रं दृष्ट्वा - "किं भोः, भवतः इच्छा पूर्णा न अभवत् वा ?" इति पृष्टवान् जयदेवः ।

"न भोः, तदर्थं न आगतवान् अहम् । इतःपरं स्पर्धाः न इच्छामि इति वक्तुम् आगतवान् । तदर्थं कियत् धनम् अपेक्षितम् इति वदतु" इति उक्तवान् जलराक्षसपुत्रः ।

जयदेवः क्षणं विचिन्त्य शिरसि स्थितं

शिरस्त्रं प्रदर्शयन् - "शिरस्त्रपरिमितानि सुवर्णनाणकानि ददातु" इति उक्तवान् ।

जयदेवस्य वचनं श्रुत्वा सः अनुक्षणं पितुः समीपं गत्वा प्रवृत्तं सर्वं निवेदितवान् । पुत्रस्य वचनं श्रुत्वा राक्षसः महता आनन्देन सुवर्णनाणकानि दत्त्वा प्रेषितवान् ।

तावति काले जयदेवः शिरस्त्रस्य मध्यभागे रन्ध्रमेकं कृतवान् । भूमौ गर्तं कृत्वा तस्य उपरि रन्ध्रमयं शिरस्त्रं स्थापितवान् । जलराक्षसपुत्रः शिरस्त्रं नाणकैः पूरयितुम् उद्युक्तः अभवत् । किन्तु महता प्रयत्नेन अपि तत् पूर्णं न अभवत् ।

तदा जयदेवः तम् उद्दिश्य - "इतोऽपि नाणकानि आनयतु । शिरस्त्रं पूर्णं न अभवत्" इति उक्तवान् ।

जलराक्षसपुत्रः - "इतोऽपि नाणकानि ददातु" इति पितरम् उक्तवान् ।

"तावन्ति नाणकानि स्थापितानि चेत् अपि शिरस्त्रं पूर्णं न अभवत् वा ? किं कर्तुं शक्यते ? पुनः नाणकानि नयतु" इति उक्तवान् जलराक्षसः । द्वितीयवारम् अपि शिरस्त्रं पूर्णं न अभवत् । तृतीयवारं यदा नाणकानि स्थापितानि तदा गर्तः शिरस्त्रं च पूर्णम् अभवत् ।

"इतःपरम् अहं गमिष्यामि । निश्चिन्ताः भवन्तु भवन्तः" इति उक्त्वा जयदेवः तं प्रेषितवान् । अनन्तरं नाणकानि स्वीकृत्य स्वग्रामं गत्वा महत् गृहं निर्माय धनिक-जीवनम् आरब्धवान् ।

तदा तस्य अग्रजौ आगत्य - "कुतः एतावत् धनं प्राप्तम् ?" इति पृष्टवन्तौ ।

"भवद्भ्यां दत्तया रज्ज्वा जालं निर्माय अरण्ये स्थितान् प्राणिनः गृहीत्वा विक्रयणं कृत्वा धनं सम्पादितवान्" इति उक्तवान् जयदेवः ।

"तां रज्जुं मह्यं ददाति वा ? पुनः भवते प्रत्यर्पयिष्यामि" इति उक्तवान् सोमदेवः ।

तदा जयदेवः "स्वीकरोतु भोः । किमर्थं सङ्कोचः ?" इति वदन् रज्जुम् अग्रजाय दत्तवान् । किन्तु तां रज्जुं सः पुनः न प्राप्तवान् एव । यतः तां रज्जुं स्वीकृत्य तस्य अग्रजौ कुत्र गतौ इति न ज्ञातम् एव ।



## चित्रशीर्षिका-स्पर्धा * पारितोषिकं १००/- रूप्यकाणि

विजितां शीर्षिकां अगस्ट् - १९९६ मासे प्रकटयिष्यामः ।



S.G. SESHAGIRI



S.G. SESHAGIRI

* उपरितनं चित्रद्वयं पश्यन्तु । * युक्तां शीर्षिकां परस्पर-सम्बन्धि-वाक्यद्वयेन लिखित्वा जून् - २० तः पूर्वम् एव प्रेषयन्तु । * अनन्तरम् आगतां शीर्षिकां न परिशीलयिष्यामः । * स्पर्धायां विजेता १००/- रूप्यकात्मकं पारितोषिकं प्राप्स्यति । * शीर्षिका समपत्रे (पोस्ट-कार्ड्) एव लेखनीया । तत्र अन्यः विषयः न लेखनीयः । * अधोनिर्दिष्ट-सङ्केताय शीर्षिका प्रेषणीया ।

**चन्दमामा(संस्कृतम्) 'अक्षरम्', ८ उपमार्गः, २ घट्टः, गिरिनगरम्, बेङ्गलूरु - ५६० ०८५**

---

**'एप्रिल्'मासस्य चित्रशीर्षिकास्पर्धायाः परिणामः -**

प्रथमचित्रम् - **हे शिल्पसुन्दरि, प्राचीना भवती नाशिता स्वच्छन्दम् ।**

द्वितीयचित्रम् - **हे घण्टासूचिनि, नवीना अपि भवती नाश्येत एव कदाचित् ।**

प्रेषिका - विन्ध्या सि.एच्. ८२, टेलिकाम् कालोनी, एन्.टि.वै. ले औट्, बेङ्गलूरु - २६

# चन्दमामा

वार्षिकं ग्राहकशुल्कं (भारते)- रू. ६०-००

विदेशीय-ग्राहकशुल्क-विवरणार्थं लिखन्तु -

डाल्टन् एजन्सीस्, चन्दमामा बिल्डिङ्ग्स्, वडपळनी, मद्रास् - ६०० ०२६

Printed by B.V. REDDI at Prasad Process Private Ltd., 188 N.S.K. Salai, Madras 600 026 (India) and Published by B. VISHWANATHA REDDI on behalf of CHANDAMAMA PUBLICATIONS, Chandamama Buildings, Vadapalani, Madras 600 026 (India). Controlling Editor: NAGI REDDI.

# जीवन में हो उमंग, मधुरता के संग.



तुलसी रोपूँ अपने अंगना
इसकी वृद्धि कभी रूके ना



अंधे चाचा कंवर बेचारे,
माता-पिता सा मुझे दुलारें
मैं भी उनके साथ जाउंगी,
उनको सड़क पार कराउंगी.



अरे हाँ। डैडी को हो गया है फ्लू
और मम्मी ने कहा है कि मैं उन्हें
दवा पिला दूं.



छुट्टी ले गंगूबाई की मौज
बर्तनों की जुटी है फौज
कहाँ से आई इतनी आफत
मेरी, राधा मौसी को मुसीबत



जब तक पेटू राजू आए
काजू बरफी मेरी चट कर जाए
उससे पहले स्मिता खाले
चाहे मुझे बिल्कुल न मिले.



टॉमी जब भी करता मस्ती
उसको चोट बहुत है लगती
डॉक्टर की दी दवा लगाऊँ
उसके ज़ख्मो को सहलाऊँ



राजीव अंकल सुधारें कार
मेरी मदद उन्हें दरकार
मैंने उनका हाथ बंटाया
मम्मी सोचें काम बढ़ाया



चंद्रा टीचर पढाती हिसाब
मैंने उनको दिए गुलाब
कितने, इसका नहीं हिसाब




**रावलगांव**

मीठी-मीठी कामयाबी का रस... बरसों-बरस.

